**Statement about ownership of CHANDAMAMA (Sanskrit)**
**Rule 8 (Form VI), Newspapers (Central) Rules, 1956**

| | |
|---|---|
| *1. Place of Publication* | 'CHANDAMAMA BUILDINGS'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *2. Periodicity of Publication* | MONTHLY<br>Ist of each calender month |
| *3. Printer's Name* | B.V. REDDI |
| *Nationality* | INDIAN |
| *Address* | Prasad Process Private Limited<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *4. Publisher's Name* | B.VISWANATHA REDDI |
| *Nationality* | INDIAN |
| *Address* | Chandamama Publications<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *5. Editor's Name* | B.NAGI REDDI |
| *Nationality* | INDIAN |
| *Address* | 'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *6. Name and Address of individuals who own the paper* | CHANDAMAMA PUBLICATIONS<br>PARTNERS:<br>1. Sri B. VENKATRAMA REDDY<br>2. Sri B.V. NARESH REDDY<br>3. Sri B.V. SANJAY REDDY<br>4. Sri B.V. SHARATH REDDY<br>5. Smt. B. PADMAVATHI<br>6. Sri B.N. RAJESH REDDY<br>7. Smt. B. VASUNDHARA<br>8. Kum. B.L. ARCHANA<br>9. Kum. B.L. ARADHANA<br><br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |

I, B Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

1st March 1997

**B. VISWANATHA REDDI**
*Signature of the Publisher*



# चन्दमामा

## मार्च् -१९९७



## अन्तरङ्गम्


| | | |
|---|---|---|
| सम्पादकीयम् | .... | ७ |
| वार्ताविशेषः | .... | ९ |
| अतिथिसत्कारः | .... | १० |
| पशुस्वभावः | .... | १६ |
| सम्राट् अशोकः - १ | .... | १७ |
| ज्ञानी सुन्दरः | .... | २५ |
| समुद्रतीरप्रयाणम् - १५ | .... | ३३ |
| राक्षसश्रेष्ठः | .... | ३७ |
| चन्दमामायाः सुवर्णसमयः-९ | .... | ४१ |
| महाभारतम् - ३२ | .... | ४५ |
| समयस्फूर्तिः | .... | ५२ |
| चन्दमामानुबन्धः - ९९ | .... | ५३ |
| रसवार्ताः | .... | ५६ |
| पितुः अपेक्षा | .... | ५७ |
| अपूर्ववस्तु | .... | ६१ |
| चित्रशीर्षिकास्पर्धा | .... | ६६ |





प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००

# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'





## सर्जनशीलाभिरुचित्वेन परिगणनीया कला

राष्ट्रियशिक्षासंशोधनपरिषत् (NCERT) शिक्षणक्षेत्रे अनेकविधानि संशोधनानि करोति । सा छात्राणां सर्जनाभिरुचिवर्धने विशेषनैर्भर्यवती अस्ति । अतः तया स्व-अधीनविद्यालयानां कृते निर्देशः प्रेषितः यत् दशमकक्ष्यान्तं पाठ्यक्रमे चित्रलेखनं सङ्गीतं च योजितं भवेत् इति । याः शालाः तस्याः संस्थायाः पाठ्यक्रमम् अनुसरन्ति ताः सर्वाः अपि एतं नियमम् अनुसरन्त्यः कलाध्यापकानां नियुक्तिं कृतवत्यः । एतस्याः संस्थायाः पाठ्यक्रमम् अननुसरन्त्यः अपि काश्चन शालाः कलां स्वपाठ्यक्रमे योजितवत्यः दृश्यन्ते । किन्तु तासु कलाविषयम् अधिकृत्य परीक्षा लघुपरीक्षा वा न प्रचलति, अग्रिमाध्ययनार्थं कलाविषये उत्तीर्णता अनिवार्या अपि न ।

कलाविषयं स्वपाठ्यक्रमे योजितवन्तः विद्यालयाः वस्तुतः नितरां विरलाः । सर्वकारीयाः नगरसभीयाः च विद्यालयाः एव एतद्विषये महतीम् उपेक्षां प्रदर्शयन्तः दृश्यन्ते इति तु महतः खेदस्य विषयः । तेषु केचन विद्यालयाः चित्रलेखनादिकं यद्यपि पाठ्यक्रमे योजितवन्तः दृश्यन्ते, किन्तु चित्रकलावधिकाले चित्रकलाध्यापकस्य पाठनं तु न प्रचलति । प्रत्युत यस्य समयावकाशः भवति सः अध्यापकः स्वविषयं पाठयति, अन्यथा छात्राः स्वाच्छन्द्यसुखम् अनुभवन्ति । चित्रकलादिस्पर्धायाः आयोजकानाम् अयम् अनुभवः अस्ति यत् चित्रकलादिस्पर्धार्थं छात्रान् प्रायः न प्रेषयन्ति विद्यालयाः इति । छात्राः यदि स्पर्धादिनिमित्तं समयं यापयेयुः तर्हि पठनार्थं पर्याप्तं समयम् अप्राप्नुवन्तः ते परीक्षासु न्यूनान् अङ्कान् प्राप्नुयुः इति आतङ्कः तेषाम् ।

वस्तुतः चित्रलेखनं वर्णलेपनं च सर्जनप्रवृत्तिप्रेरकम् । छात्राणां कल्पनाभिवृद्धेः सोपानम् । तदुभयम् अपि छात्राणां परिशीलनसामर्थ्यं वर्धयति । अतः चित्रकलादिषु आसक्ताः छात्राः पोषकैः अवश्यं प्रोत्साहनीयाः । 'यदि मम पुत्रः कलासक्तः भवेत् तर्हि सः चित्रकारः भवेत्, न तु वैद्यः, तन्त्रज्ञः, विज्ञानी, न्यायवादी वा' इत्येषा अवास्तविकी भीतिः परित्यक्तव्या पोषकैः ।

'कलादिविषयेषु आसक्तान् छात्रान् तद्विषयाभ्यासात् यदि वयं निवारयामः तर्हि तेषां प्रतिभाविकासः एव कुण्ठितः भवति' इत्येषः अंशः सर्वदा स्मर्तव्यः अस्माभिः ।


सम्पुटः - १३ मार्च् - १९९७ सञ्चिका - १२

प्रतिकृतिमूल्यं रू. ७.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००




# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अभियोगः | - appeal | प्रतिवेशी | - neighbour |
| आयुः | - life | प्रासादः | - palace |
| आर्द्रः | - wet | भषति | - barks |
| उत्कोचः | - bribe | भृत्यः | - servant |
| उत्पाट्य | - uprooted | मार्जारः | - cat |
| उरः | - chest | मृगया | - hunting |
| ऋणम् | - debt | मुखद्वारम् | - maindoor |
| कन्दः | - bulbous | वणिक् | - merchant |
| करः | - tax | वस्त्रकटः | - carpet |
| करवस्त्रम् | - handkarchief | वस्त्रफलकम् | - banner |
| कर्मकरः | - worker | वितानम् | - pandal |
| कांस्यम् | - bronze | शपथः | - outh |
| कुञ्चिका | - key | शलाटुः | - unripe fruit |
| कौमुदी | - moonlight | शोभायात्रा | - procession |
| क्षतिग्रस्तः | - woonded | सपत्नी | - secondwife |
| ग्रन्थिः | - knot | सिक्थम् | - wax |
| दर्पणः | - mirror | सूत्रखण्डः | - piece of thread |
| निष्पीड्य | - squeezed | सेतुः | - bridge |
| पङ्गुः | - lame | स्थूलकायः | - fat person |

वार्ताविशेषः -

# पर्शियन्खातस्थाः सप्त देशाः

भारतदेशस्य चरित्रं ये पठितवन्तः ते ईशान्यदिशि स्थितानां सप्तानां देशानां विषये जानन्ति एव । एते यथा तथैव पर्शियन्खातपरिसरे अपि सप्त देशाः सन्ति । ते देशाः 'सप्त भगिन्यः' (सेवेन् सिस्टर्स्) इति निर्दिश्यन्ते । इदानीं ते देशाः अरब्-राष्ट्रसमवायः (युनैटेड् अरब् एमिरेट्स्=यु.ए.इ.) इति निर्दिश्यन्ते । रास् अल् खायमा, उमाल् खायवान्, अज्मान्, षार्जा, दुभाय्, अबुधाबि, पुजायरा इत्येते सप्त देशाः दक्षिणोत्तरं प्रसृताः सन्ति । अरब्राष्ट्रसमवायेन डिसेम्बर्मासस्य द्वितीये दिनाङ्के रजतोत्सवः आचरितः ।

सार्धैकशतवर्षेभ्यः पूर्वम् एते देशाः 'ट्रूसियल्स्टेट्स्' इति निर्दिश्यन्ते स्म । १८२०तमे वर्षे ब्रिटन्देशसम्बद्धः सन्धिः कश्चनः अङ्गीकृतः इत्यतः एतैः तच्च नाम प्राप्तम् । षेक्जनाः स्थानीयशासनं निर्वहन्ति स्म । तैः सह चर्चां कृत्वा ब्रिटन्देशः स्वस्य सैन्यं तत्र स्थापयितुम् अनुमतिः यथा प्राप्येत तथा सन्धिम् उपास्थापयत् । अबुधाबिप्रदेशीयः षेक् जायद् खलीफा अल् नाह्यान् दीर्घकालं यावत्, तन्नाम १८५५ तः १९०९ तमवर्षं यावत्, राज्यभारं निरूढवान् । इदानीन्तनसमवायस्य अध्यक्षः षेक् षक्पट् १९२८तमे वर्षे सिंहासनम् आरूढवान् । तस्य अनुजः षेक् जायदः स्वस्य मतगुरोः सकाशात् विद्यां गृहीत्वा मरुभूमौ सर्वत्र सञ्चारं कृतवान् । षेक् तं सूचितवान् यत् तैलकूपानां खनने तैलसङ्ग्रहणादिषु च ब्रिटन्देशस्य साहाय्यं करणीयम् इति । एतस्मात् जायदः मरुभूमिसम्बद्धेषु वाणिज्येषु विशेषज्ञानं प्राप्तवान् । 'तैलकूपाः एव अस्मद्देशस्य भाग्योदयस्य कारणानि भवितुम् अर्हन्ति' इति अवगतवान् सः ।

अत्रान्तरे सः षेक्प्रतिनिधित्वेन पूर्वदेशेषु नियुक्तः अभवत् । एतेन तस्य कार्यकौशलं ज्ञानं च प्रवृद्धम् । सः अल्आयिन्प्रदेशं कृषियोग्यं कृतवान् । एतस्मात् तत्प्रदेशीयजनानां जीवने महत् परिवर्तनं जातम् ।

१९६६तमे वर्षे अगस्ट्मासस्य ६ दिनाङ्के सः अबुधाबिराज्यस्य शासकः जातः । तैलकूपानां कारणतः यः आयः प्राप्यते स्म तस्य उपयोगेन सः स्वदेशस्य अभिवृद्धिं कर्तुं प्रयत्नम् आरब्धवान् । अत्रान्तरे ब्रिटन्देशेन चिन्तितं यत् एतत्प्रदेशतः स्वसैन्यं प्रतिस्वीकरणीयम् इति । पूर्वतनसन्धेः अवधिः अपि समाप्तप्रायः आसीत् । अतः षेक्जायदः प्रतिवेशिनः षट् देशान् सूचितवान् यत् वयं सम्भूय समवायं रचयाम इति ।

१९७१मे वर्षे जुलैमासस्य १८ दिनाङ्के चारित्रिकः निर्णयः कृतः यत् 'अरबराष्ट्रसमवायः' (युनैटेड् अरब् एमिरेट्स्) रचनीयः इति । चतुर्णां मासानाम् अनन्तरं, तन्नाम डिसेम्बर्मासस्य द्वितीये दिनाङ्के एतस्य समवायस्य शासनम् आरब्धम् । अबुधाबिदेशीयः षेक् जायेद् एतस्य समवायस्य अध्यक्षत्वेन चितः अभवत् । प्रतिपञ्चवर्षं प्रवर्तमाने अध्यक्षीयनिर्वाचने सः एव चितः भवन् अस्ति ।




समवायरचनायाः अनन्तरं सप्तसु अपि देशेषु अभिवृद्धिकार्यक्रमाः विशेषतः प्रवृत्ताः । विद्याक्षेत्रादीनि अत्र उदाहरणानि । १९७१तमे वर्षे अत्र १४७ शालाः आसन् । वृत्तिपरविद्यालयाः न आसन् एव । इदानीं तत्र ९०० विद्यालयाः सन्ति । एकः वैद्यकीय-विश्वविद्यालयः अपि अस्ति । अल्अयन्प्रदेशे १९७७तमे वर्षे समवायीयविश्वविद्यालयः स्थापितः अभवत् । एतस्मिन् विश्वविद्यालये १५,००० छात्राः पठन्ति । एतेषु विदेशीयाः विद्यार्थिनः अपि सन्ति केचन । एतेषु देशेषु ८४% जनाः अक्षरज्ञाः सन्ति । १९९६तमे वर्षे प्रकाशितं विश्वस्वास्थ्यसंस्थायाः प्रकटनं ज्ञापयति यत् मध्यप्राच्यदेशेषु स्थितेषु बालेषु अरबराष्ट्रसमवायीयाः एव आरोग्यवन्तः दृढकायाः च इति।



# अतिथिसत्कारः

श्रीपुरनामके ग्रामे सदानन्दः नाम कश्चित् भाग्यवान् आसीत् । सः अत्यन्तं गौरवेण, आदरेण च अतिथिसत्कारं करोति स्म । आत्मना क्रियमाणः अतिथिसत्कारः एव अतीव श्रेष्ठः इति सः भावितवान् आसीत् ।

सदानन्दस्य गृहं ये अतिथयः आगच्छन्ति स्म ते सर्वे तं श्लाघन्ते स्म । एतस्मात् सदानन्दः महान्तं सन्तोषम् अनुभवति स्म । परन्तु कदाचित् गोपालनामकः कश्चित् सदानन्दस्य गृहे अतिथिसत्कारं स्वीकृत्य - ''श्रीरङ्गे स्थितेन रङ्गनाथेन क्रियमाणस्य अतिथिसत्कारस्य अनन्तरं भवतः अतिथि-सत्कारः एव श्रेष्ठः'' इति उक्तवान् ।

स्वस्य अपेक्षया रङ्गनाथः श्रेष्ठः इत्यंशं ज्ञात्वा सदानन्दः गोपालं पृष्टवान् - ''सः रङ्गनाथः कः ? तस्य वैशिष्ट्यं किम् ?'' इति ।

तदा गोपालः महता आश्चर्येण - ''भवान् रङ्गनाथस्य विषयं न जानाति वा ? अतिथिसत्कारविषये तस्मात् ज्ञातव्यं बहु अस्ति । तस्य विषेशता वचनैः वक्तुं न शक्यते । कदाचित् भवान् श्रीरङ्गं गत्वा तं पश्यतु । तदा भवता एव ज्ञायते सर्वम् अपि'' इति सदानन्दम् उक्तवान् ।

एतत् श्रुत्वा सदानन्दः अनन्तरदिने एव श्रीरङ्गं प्रति प्रस्थितवान् । रङ्गनाथस्य गृहं प्राप्तवान् च ।

रङ्गनाथस्य गृहं तु लघु आसीत् । सः गृहस्य पुरतः एव उपविष्टवान् आसीत् । स्वगृहम् आगतवन्तं सदानन्दं दृष्ट्वा तस्य परिचयादिकं पृष्टवान् । सदानन्दः स्वस्य वास्तविकपरिचयम् अनुक्त्वा 'वज्र-वाणिज्यनिमित्तम् आगतवान् अस्मि' इति रङ्गनाथम् उक्तवान् ।

''भवान् वज्राणि विक्रेतुम् इच्छति चेत्

'भामहः'

साम्बमूर्तेः गृहं गच्छतु । सः वज्राणि दृष्ट्वा योग्यमूल्यस्य कथने निपुणः अस्ति'' इति उक्तवान् रङ्गनाथः ।

अनुक्षणम् एव सदानन्दः - ''अहं भवतः अतिथिः भवितुं शक्नोमि वा ?'' इति पृष्टवान् ।

''स्वामिन् ! भवान् धनिकः इव दृश्यते । अहं तु निर्धनः अस्मि । भवतः यथोचितं सत्कारं कर्तुं मया न शक्येत'' इति उक्तवान् रङ्गनाथः ।

''अहं भवतः गृहे एव वासं कर्तुम् इच्छामि । भवतः कष्टं भवति चेत् साम्बमूर्तेः गृहं गमिष्यामि'' इति उक्तवान् सदानन्दः ।

सदानन्दस्य वचनं श्रुत्वा रङ्गनाथः - ''अतिथिसत्कारार्थम् अवकाशः प्राप्तः चेत् तत् परमसौभाग्यकरं भावयामि । भवता अन्यत्र गमनं चिन्तनीयं नास्ति'' इति उक्त्वा गौरवेण तं गृहस्य अन्तः नीत्वा पादप्रक्षालनार्थं जलं दत्तवान् । किञ्चित्-समयानन्तरं रङ्गनाथस्य पत्नी भोजनं सज्जीकृतवती । भोजने अधिकभक्ष्याणि न आसन् । किन्तु भोजनं रुचिकरम् आसीत् ।

भोजनानन्तरं सदानन्दः - ''अहं साम्बमूर्तेः गृहं गमिष्यामि'' इति उक्तवान् ।

परन्तु रङ्गनाथः एतत् अनङ्गीकृत्य - ''भवान् अस्माकं गृहे एव अतिथिसत्कारं स्वीकृत्य गच्छेत्'' इति उक्तवान् ।

'कथम् अत्र मया समययापनं करणीयम् ? न विनोधसाधनानि, न वा भोगसाधनानि अत्र । रङ्गनाथस्य अतिथि-सत्कारः सरलः अस्ति । मम गृहे तु अतिथीनां कृते विभिन्नभक्ष्याणि क्रियन्ते । तथापि गोपालः रङ्गनाथस्य सत्कारः एव श्रेष्ठः इति कथम् उक्तवान्' इति सदानन्दः चिन्तितवान् ।





SXN – P-2



कलानैपुण्यस्य प्रदर्शनार्थम् अवकाशः कल्पनीयः च' इति मनसि एव चिन्तितवान् सदानन्दः ।

अनन्तरं सदानन्दः - ''एतस्य श्रीरङ्गस्य वैशिष्ट्यं किम् ?'' इति रङ्गनाथं पृष्टवान् ।

तदा रङ्गनाथः - ''प्रतिदिनं वयं यं ग्रामं पश्यामः तत्र वैशिष्ट्यं किमपि न भासते । अस्माकं ग्रामे पुरातनाः देवालयाः, फलवाटिकाः च सन्ति । अत्यन्तं प्राचीनम् एकं दुर्गम् अपि अस्ति । भवान् एतत् दुर्गं द्रष्टुम् इच्छति चेत् मम पुत्राः भवते दर्शयिष्यन्ति । परन्तु तत् दूरे अस्ति । गमनागमने भवतः श्रान्तिः भवेत्'' इति उक्तवान् ।

वस्तुतः ग्रामदर्शने सदानन्दस्य इच्छा न आसीत् । अतः सः - ''इदानीम् एव अहं श्रान्तः अस्मि'' इति वदन् रङ्गनाथस्य गृहसदस्यानां कलानैपुण्यविषये पृष्टवान् । रङ्गनाथः चित्रकलायां, तस्य पत्नी गानकलायां, तस्य अनुजः कवितालेखने, तदीयाः पुत्राः च मृत्तिकया विविध-पाञ्चालिकानिर्माणे च निपुणाः आसन् ।

सदानन्दः सर्वेषाम् अपि निपुणतां द्रष्टुम् इष्टवान् । परन्तु रङ्गनाथः अनङ्गीकृत्य - ''भवतः प्रयाणस्य श्रान्तता एव न अपगता । अन्यच्च अद्य महान् घर्मः अस्ति अपि । अतः भवान् विश्रान्तिं स्वीकरोतु'' इति उक्तवान् ।

परन्तु सदानन्दः महान्तम् अनुरोधं कृतवान् । तदा रङ्गनाथः - ''वयं सर्वे भवन्तं बहु इष्टवन्तः । कानिचन दिनानि भवान् अत्र तिष्ठेत् इति अस्माकम् अपेक्षा

तावति काले रङ्गनाथस्य पत्नी, पुत्राः, अनुजः च तत्र आगतवन्तः । ते सर्वे - ''श्रीपुरस्य विषेशतां वदतु'' इति सदानन्दं प्रार्थितवन्तः । सः यदा विषयं वदति स्म तदा ते सर्वे अवधानेन विषयं श्रुतवन्तः । सम्भाषणसमये सदानन्दः गीतं गायति इति ज्ञात्वा गीतम् अपि गापितवन्तः ते ।

एतावत्पर्यन्तं सदानन्दस्य वचनं श्रद्धया कोऽपि न श्रुतवान् आसीत् । एतस्य गीतम् अपि कोऽपि न श्लाघितवान् आसीत् । इदानीम् आत्मना गीतं यत् गीतम् अस्ति तत् श्रुत्वा सर्वे श्लाघितवन्तः इति कारणतः सदानन्दः नितरां सन्तुष्टः ।

'अतिथिसत्कारः नाम न केवलं पूर्णोदरभोजनदानम्, अपि तु अतिथीनां वचनस्य श्रवणम् अपि । तेषु स्थितस्य

अस्ति । श्वः आरभ्य भवान् अस्मासु एकैकस्यापि कलानैपुण्यं द्रष्टुम् अर्हति । अतः भवान् अत्रैव तिष्ठतु'' इति उक्तवान् ।

एतत् श्रुतवतः सदानन्दस्य सन्तोषः जातः । वस्तुतः सर्वं द्रष्टुं तस्मिन् सहना न आसीत् । तथापि अतिथिना सह गृहस्थस्य व्यवहारः कथं भवेत् इति सः ज्ञातवान् । 'इतःपरं गृहम् आगतवतां पुरतः स्वविषये अधिकं किमपि न वक्तव्यम्' इति सः चिन्तितवान् । न केवलम् एतावत्, 'आगताः कदा गच्छन्ति इति न चिन्तनीयम् । प्रत्युत, ते अधिकदिनानि तिष्ठन्तु इत्येव मनसि भावना भवेत्' इत्यपि ज्ञातवान् सः ।

मध्याह्ने सदानन्दस्य अभिरुचिं ज्ञातवती आसीत् इति कारणतः रङ्गनाथस्य पत्नी रात्रौ भोजनार्थं सदानन्दस्य इष्टं पाकम् एव कृतवती आसीत् । भोजनानन्तरं सर्वे किञ्चित्कालं सम्भाषणं कृतवन्तः । अनन्तरं रङ्गनाथः सदानन्दं प्रकोष्ठं नीत्वा - ''भवान् स्वस्य अपेक्षां वदतु'' इति उक्तवान् ।

'अत्यन्तं सामान्यः एषः रङ्गनाथः धनिकस्य मम अपेक्षां कथं पूरयेत् ? भवतु, एषः सम्यक् पाठनीयः' इति चिन्तयन् सदानन्दः - ''यदि मम अपेक्षा भवता पूरयितुं न शक्यते तर्हि अहं चिन्तयामि यत् भवता पूरयितुम् अशक्याम् अपेक्षाम् अहं पृष्टवान् इति । भवान् चिन्तयति यत्-भवता मम अपेक्षा न पूरिता इति । एवम् उभयोः अपि असन्तोषः । अतः, यः कोऽपि भवतु, स्वसामर्थ्यं विचिन्त्य वाग्दानं करोति चेत् वरं खलु'' इति उक्तवान् ।

''भवतः वचनम् अक्षरशः सत्यम् । किन्त भवतः अपेक्षां पूरयितुं मम शक्तिः अस्ति एव । अतः एव अहं भवन्तं तथा





पृष्टवान् । भवान् सङ्कोचं विना स्वस्य अपेक्षां वदतु'' इति उक्तवान् रङ्गनाथः ।

तदा सदानन्दः असहनया उक्तवान् - ''देवलोकं गत्वा अप्सरसां नृत्यं द्रष्टव्यम् इति मम अपेक्षा'' इति ।

रङ्गनाथः तस्मै मञ्चं दर्शयन् - ''इदानीं भवान् विश्रान्तिं स्वीकरोतु । भवतः अपेक्षा निश्चयेन पूरिता भविष्यति'' इति उक्त्वा ततः गतवान् ।

मञ्चे शयनस्य अनुक्षणम् एव सदानन्देन निद्रा प्राप्ता । निद्रायां तेन स्वप्नः दृष्टः । स्वप्ने सः देवलोकं गतवान् । तत्र अप्सरसां नृत्यं दृष्टवान् । अनन्तरदिने यदा सः निद्रातः उत्थितवान् तदा तस्य महती तृप्तिः जाता आसीत् । सः गत्वा रङ्गनाथं कृतज्ञताम् उक्त्वा - ''अहं कथं तं स्वप्नं दृष्टवान् ?'' इति पृष्टवान् ।

''सः स्वप्नः न, वास्तविकता'' इति उक्तवान् रङ्गनाथः । अनन्तरं समग्रं वास्तवविषयं सदानन्दम् उक्तवान् च -

''एकदा मम गृहं कश्चित् अतिथिः आगतः आसीत् । सः मया कृतेन अतिथिसत्कारेण अत्यन्तं तृप्तः सन्- 'महानुभाव ! अहं कश्चित् तपस्वी । मयि स्थितायाः शक्तेः अल्पभागः वा सज्जनाय दातव्यः इति मम इच्छा अस्ति । इदानीं सा इच्छा फलिता अस्ति । अद्य आरभ्य प्रतिदिनं भवतः असाध्या अपेक्षा अपि पूर्यते । अतः भवान् अपारसम्पत्तेः स्वामी सन् एवम् एव अतिथिसत्कारं कुर्वन् सुखेन जीवतु' इति अनुग्रहं कृतवान् ।

तदा अहं किञ्चिदपि सन्तोषम् अननुभवन् - ''स्वामिन् ! मम अदृष्टेन एव भवादृशः तपस्वी मम गृहम् अतिथिरूपेण आगतः अस्ति । भवतः वरः अपायकरः इति मम भाति । यतः अपेक्षा मनसः सम्बद्धा अस्ति । मनसः नियन्त्रणं महते क्लेशाय । अतः एतस्य वरस्य दुरुपयोगः कदाचित् भवेत् । एतस्मात् बहूनां कष्टम् अपि भवेत् । एतादृशः वरः इन्द्रियनिग्रहिणां भवादृशानाम् एव भवतु । मादृशस्य सामन्यस्य उचितं न भवति'' इति उक्तवान् ।

''भवतु ! प्रतिदिनं भवतः गृहे शतं सुवर्णनाणकानि पतन्तु इति वरं ददामि वा ?'' इति पृष्टवान् अतिथिः ।

''स्वामिन् ! मानवाः स्वशक्त्या एव सर्वं सम्पादयेयुः । तथा सम्पादितेन धनेन

एव सुखम् अनुभवेयुः च । मया सम्पादितेन धनेन एव अहम् अतिथिसत्कारं करोमि । अतः भवदीयं वरम् अहं न इच्छामि'' इति उक्तवान् अहम् ।

''भवतु ! अतिथयः यत् धनम्, आभरणं च पृच्छन्ति तत् यथा भवान् दद्यात् तथा वरं ददामि वा ?'' इति पुनः पृष्टवान् अतिथिः ।

तदा अहं - ''स्वामिन् ! तदपि मया सम्पादितं धनं न भवति खलु । अतः अतिथीनां मनःसन्तोषार्थम् अपेक्षितया शक्त्या माम् अनुगृह्णातु'' इति उक्तवान् ।

''अतिथीनां मनःसन्तोषार्थं धन-कनक-वाहनानाम् आवश्यकता न भवेत् वा ?'' इति पृष्टवान् अतिथिः ।

''तथा चेत् मम गृहं न केवलम् अतिथयः, अपि तु याचकाः अपि आगच्छन्ति । अहं दाता भवितुं न इच्छामि । दूरप्रदेशेभ्यः ये आगच्छन्ति तेभ्यः आश्रयं दत्त्वा तेषां सत्कारः करणीयः इत्येव मम इच्छा । मानवस्य अपेक्षा मनसः सम्बद्धा भवति । यदि मनसः तृप्तिः भवेत् तर्हि मानवस्य अपेक्षा एव न भवेत् । मनसः तृप्त्यर्थं मह्यं शक्तिं ददातु'' इति प्रार्थितवान् अहम् ।

तावता आतिथिः वास्तवविषयं ज्ञात्वा - ''स्वयम् एव भवतः गृहं यः अतिथिः आगच्छति तस्मै आतिथ्यं ददातु भवान् । भवतः अतिथीनाम् अपेक्षा रात्रौ निद्रासमये पूर्यते । तेषां तृप्तिः भवति'' इति वरं दत्त्वा ततः गतवान् ।

तस्मात् दिनात् तेन क्रमेण एव अहम् अतिथिसत्कारं कुर्वन् अस्मि'' इति ।

एतत् विवरणं श्रुतवतः सदानन्दस्य संशयाः परिहृताः अभवन् । 'रङ्गनाथः स्वार्थं विना निःस्वार्थभावनया अतिथीनां मानसिकतृप्त्यर्थं प्रयत्नं करोति । अतः एव मत्तः आतिथ्यं स्वीकृतवान् गोपालः रङ्गनाथं श्लाघमानः एकवारं गच्छतु तस्य गृहम् इति उक्तवान्' इति चिन्तितवान् सः ।

अनन्तरं सदानन्दः स्वग्रामं गत्वा स्वव्यवहारे परिवर्तनं कृतवान् । कोऽपि अतिथिः आगत्य तं श्लाघते चेत् ''मया दीयमानात् आतिथ्यात् अपि श्रीरङ्गस्य रङ्गनाथस्य आतिथ्यम् एव श्रेष्ठम्'' इति विनयेन वदति स्म सः ।



# पशुस्वभावः

शिवः पादाभ्याम् एव काशीयात्रां समाप्य आगतवान् । ग्रामे सम्मिलितान् जनान् स्वानुभवान् श्रावयन् - ''प्रयाणे मया द्वौ पङ्गू मिलितौ । मम वसतिस्थाने एव भोजनादिकं, किञ्चित् धनं च दत्त्वा अहं प्रथमस्य साहाय्यं कृतवान् । द्वितीयस्य अपि एवं रीत्या एव साहाय्यं कृतवान् । मम प्रत्यागमनसमये प्रथमतया अहं द्वितीयं पङ्गुं दृष्टवान् । सः मार्गपार्श्वे एव लघु आश्रमं निर्माय महान् संन्यासी इव दण्डं कमण्डलुं च गृहीत्वा उपविष्टवान् आसीत् । सः माम् अपरिचितम् इव दृष्टवान् । तस्य शिष्याः - 'एषः संन्यासी अद्भुतशक्तिं सम्पादितवान् अस्ति' इति प्रचारं कुर्वन्तः जनेभ्यः उपायनं स्वीकुर्वन्ति स्म । किञ्चिद्दूरं गमनानन्तरम् अहं प्रथमपङ्गुं दृष्टवान् । सः अनुक्षणम् एव माम् अभिज्ञाय दिनद्वयं यावत् भक्त्या श्रद्धया च मम सेवां कृतवान् । इदानीं मम संशयः नाम किमर्थं द्वयोः व्यवहारे भेदः आसीत् ? इति'' इति उक्तवान् सः ।

तदा तस्य ग्रामस्य ज्येष्ठः - ''शिव ! शुनकाय खाद्यं दीयते चेत् सः सर्वदा भवतः साहाय्यं करोति । तथा एव मार्जाराय क्षीरं दत्तं चेत् सः भवतः द्वारा एव सेवां कारयति । शुनकः अन्नदातारं देवं मन्यते, परन्तु मार्जारः आत्मानम् एव देवं मन्यते । काशीगमनसमये भवता दृष्टे प्रथमे पङ्गौ शुनकस्वभावः आसीत् । द्वितीये पङ्गौ मार्जारस्वभावः आसीत् । मानवः अपि कश्चित् प्राणी खलु । परन्तु तस्मिन् विवेचनाशक्तिः अस्ति इति कारणतः इतरपशुभ्यः भिन्नः अस्ति सः । तथापि अस्मासु केचन पशुस्वभावम् एव प्रदर्शयन्ति'' इति विवरणं दत्तवान् ।





# सम्राट् अशोकः

मगधसाम्राज्यस्य राजधानी उद्यानवनैः फलभरितवृक्षैः च शोभते स्म । अतः एतत् नगरम् अत्यन्तं सुन्दरं दृश्यते स्म । नगरवासिनः सर्वे प्रकृतिप्रियाः आसन् । तैः मार्गम् उभयतः अपि फलपुष्पप्रधानाः वृक्षाः वर्धिताः आसन् । नगरे सर्वत्र सुगन्धयुक्तानि पुष्पाणि दृश्यन्ते स्म । अतः एव नगरस्य कश्चन भागः कुसुमनगरनाम्ना निर्दिश्यते स्म । अत्र पाटलपुष्पाणि प्रभूततया वर्धन्ते स्म इति कारणतः तत् नगरं पाटलीपुत्रम् इत्येव अन्वर्थनामकम् अभवत् ।

गङ्गा-सोनयोः नद्योः सङ्गमे स्थिते एतस्मिन् स्थले पञ्चशताधिक-द्विसहस्र-वर्षेभ्यः (२,५००) पूर्वम् "अजातशत्रुः" नाम राजा किञ्चन दुर्गं निर्मितवान् आसीत् । शतकद्वयस्य अनन्तरं चन्द्रगुप्तः एतस्य दुर्गस्य विस्तारं कृतवान् । इदानीं तावति महति दुर्गे पञ्चाशदधिकपञ्चशतं (५५०) रक्षागोपुराणि, चतुःषष्टिः द्वाराणि च सन्ति ।

यदा चन्द्रगुप्तः बालः आसीत् तदा मगधपालकाः नन्दवंशीयाः चन्द्रगुप्तं तस्य मातरं च अपमानितवन्तः । अतः एव चन्द्रगुप्तः मगधवंशस्य द्वेषी अभवत् । अन्ते चन्द्रगुप्तस्य दण्डनार्थं नन्दराजः सैनिकान् प्रेषितवान् । परन्तु चन्द्रगुप्तः महता चातुर्येण ततः कथञ्चित् पलायनं कृत्वा नगरात् बहिः गतवान् ।

'प्रपञ्चम् एव जेष्यामि' इति सङ्कल्पं कृतवान् ग्रीक्राजः अलेग्साण्डरः भारतस्य उपरि आक्रमणं कृतवान् आसीत् । तदा चन्द्रगुप्तः निर्भयेन अलेग्साण्डरस्य पुरतः गत्वा तस्य कार्यविषये आक्षेपं कृतवान् ।



तम् उपहसितवान् च । 'एतं गृह्णन्तु' इति अलेग्साण्डरः सैनिकान् आज्ञापितवान् । परन्तु बालः चन्द्रगुप्तः अश्वम् आरुह्य ततः वेगेन गतवान् । अतः सैनिकाः तं ग्रहीतुं न शक्तवन्तः ।

एतादृशः आवेशशाली प्रमादशीलः चन्द्रगुप्तः कथं मगधराज्यस्य सिंहासनम् आरूढवान् ? तत्र कारणं - चाणक्यस्य साहाय्यम् । यथा वायुः अग्नेः साहाय्यं करोति तथा चाणक्यनामकः कश्चित् पण्डितः चन्द्रगुप्तस्य साहाय्यं कृतवान् ।

पूर्वं कदाचित् तं चाणक्यम् अपि धननन्दनः अपमानितवान् आसीत् । तदा ''नन्दवंशस्य निर्मूलनम् एव मम लक्ष्यम्'' इति शपथं कृत्वा चाणक्यः नगरात् गतवान् आसीत् । तस्मिन् समये एव युवकः चन्द्रगुप्तः तेन मिलितः आसीत् । एवं द्वयोः लक्ष्यम् अपि समानम् आसीत् । चन्द्रगुप्तस्य धैर्यसाहसयोः मार्गदर्शकौ जातौ चाणक्यस्य विद्याविवेकौ । गहनारण्ये रहस्यरूपेण सैनिकान् मेलयित्वा शस्त्रास्त्रप्रयोगे, युद्धकलायां च तेभ्यः प्रशिक्षणं दत्तवन्तौ तौ । अनन्तरं तौ मगधराज्यस्य उपरि हठात् आक्रमणं कृतवन्तौ । प्रजानां प्रीत्यादरात् वञ्चितं धननन्दनं पराजित्य सिंहासनं स्वयत्तीकृतवन्तौ तौ । अनन्तरं चाणक्यः राज्यस्य प्रधानसचिवपदवीम् अलङ्कृतवान् । चन्द्रगुप्तः च महाराजपदवीं प्राप्तवान् । पूर्वं यस्मिन् राजभवने माता अपमाननम् अनुभूतवती आसीत् तस्मिन् एव भवने मातुः मुरादेव्याः नाम्ना मौर्यवंशस्य शासनम् आनीतवान् चन्द्रगुप्तः । एतस्मात् कारणात् मातुः गौरवं रक्षितवान् सः ।

एतावति काले अलेग्साण्डरः दिवं गतः आसीत् । तथापि पञ्जाब्पर्यन्तं ग्रीक्-साम्राज्यं विस्तृतम् आसीत् । चन्द्रगुप्तः स्वसैन्येन सह ग्रीक्साम्राज्यसीमापर्यन्तं गतवान् । तत्रत्यान् कांश्चन ग्रीक्राजान् पराजित्य कांश्चन प्रदेशान् आक्रान्तवान् । तत्काले अलेग्साण्डरस्य सेनानायकः सेल्यूकसः ग्रीक्साम्राज्यं पालयति स्म । चन्द्रगुप्तस्य आक्रमणवार्तां श्रुत्वा सेल्यूकसः ग्रीक्तः आगतवान् । हस्तच्युतं भागं प्रतिप्राप्तुम् इच्छन् सः चन्द्रगुप्तेन सह युद्धं कृतवान् । परन्तु मगधसैनिकाः महाशूराः आसन् । ते ग्रीक्सैनिकान् बहुधा व्रणितान् कृतवन्तः । अतः सेनानायकः सेल्यूकसः चन्द्रगुप्तेन सह सन्धिं कृतवान् ।

न केवलम् एतावत्, चन्द्रगुप्ताय स्वपुत्रीम् एयिनां दत्त्वा तयोः विवाहं वैभवेन निर्वर्तितवान् अपि सः ।

अनन्तरं चन्द्रगुप्तः माळव-घूर्जर-सौराष्ट्र-प्रभृतीनि राज्यानि क्रमशः जित्वा स्वराज्यस्य सीमां विस्तारितवान् । 'विवेकी, शक्तिसम्पन्नः समर्थः महाराजः' इति कीर्तिं सम्पादितवान् च ।

चन्द्रगुप्तस्य अनन्तरं तस्य पुत्रः बिन्दुसारः मगधराज्यं पालितवान् । पित्रा महता परिश्रमेण सम्पाद्य विस्तारितं सुविशालं राज्यं बिन्दुसारः दक्षतया रक्षितवान् । तस्य शासनकाले तक्षशिला, उज्जयिनी च विशेषख्यातिं प्राप्तवत्यौ ।



यदा बिन्दुसारः शासनं करोति स्म तदा कदाचित् कश्चित् निर्धनब्राह्मणः राजधानीं पाटलीपुत्रम् आगतवान् । तेन सह काचित् सुन्दरी युवतिः अपि आसीत् । सा तस्य पुत्री आसीत् । सः मुखद्वारम् आगत्य - 'मया महाराजः द्रष्टव्यः' इति रक्षकान् प्रार्थितवान् ।

रक्षकाः तम् उपेक्षादृष्ट्या पश्यन्तः - ''भवान् कस्य राज्यस्य राजा ? एषा महाराज्ञी का ? भवतः स्वागतं महाराजेन एव करणीयं वा ?'' इति उपहासं कृतवन्तः । परस्परं पश्यन्तः उच्चैः हसितवन्तः च ।

तदा ब्राह्मणः - ''स्वामिन् ! अहं ग्रामतः आगतवान् । महाराजः मया निश्चयेन द्रष्टव्यः एव । अतः महाराजस्य दर्शनार्थं कृपया साहाय्यं कुर्वन्तु । मम साहाय्यकरणेन अग्रे भवतां शुभं भविष्यति'' इति शान्तस्वरेण उक्तवान् ।

ब्राह्मणस्य वचनं श्रुतवन्तः रक्षकाः किञ्चित् चिन्तितवन्तः । तस्य पार्श्वे युवतिः गाम्भीर्येण शान्ततया च स्थितवती आसीत् । रक्षकाः ब्राह्मणस्य समीपं गत्वा - ''भवान् किमर्थं महाराजं द्रष्टुम् इच्छति ? भवतः आगमनस्य उद्देशं प्रथमम् अस्मान् वदतु'' इति उक्तवन्तः ।

''तत् तु रहस्यम् । तत् रहस्यं महाराजम् एव अहं वदामि, न अन्यम्'' इति उक्तवान् ब्राह्मणः ।

''महाराजः केन उद्देशेन द्रष्टव्यः इत्येतम् अंशं भवान् आदौ मन्त्रिणं वदेत् । तदा एव भवान् महाराजस्य दर्शनं प्राप्तुम् अर्हति'' इति सूचितवन्तः रक्षकभटाः ।

ब्राह्मणः यावत् किमपि वक्तुम् उद्युक्तः

तावता तत्र अश्वस्य खुरपुटशब्दः श्रुतः । कोऽपि प्रासादतः अश्वम् आरुह्य आगच्छन् अस्ति इति तैः ज्ञातम् । 'अपसरत, अपसरत' इति वदन्तः भटाः तत्र आगतवन्तः । तदा रक्षकः कश्चित् ब्राह्मणं नुन्नवान् । एतत् अकस्मात् प्रवृत्तम् इति कारणतः ब्राह्मणस्य पृष्ठतः स्थिता तस्य पुत्री अपि अधः पतितवती । तावता तत्र अश्वम् आरुह्य आगतः बिन्दुसारः अश्वं स्थगितवान् । रक्षकाः तं नमस्कृतवन्तः ।



महाराजः रक्षकान् तर्जयन्, अधः पतितं वृद्धम् अनुकम्पेन दृष्टवान् । ब्राह्मणः उत्थाय महाराजं नमस्कुर्वन् मन्दस्वरेण - "महाप्रभो ! अत्र रक्षकाणां दोषः कोऽपि नास्ति । भवतः दर्शनं कथं लभ्यते इति यावत् एतान् अहं पृच्छन् आसं तावता भवान् अत्र आगतवान्" इति उक्तवान् ।

"भवान् मां किमर्थं द्रष्टुम् इष्टवान् ?" इति पृष्टवान् राजा ।

तदा ब्राह्मणः विनयेन - "प्रभो ! तत्र किञ्चित् रहस्यम् अस्ति । रहस्यं रहसि एव वक्तव्यम्" इति उक्तवान् ।

एतावता ब्राह्मणस्य पुत्री उत्थाय महाराजं नमस्कृतवती । प्रसृतैः केशैः मलिनेन वस्त्रेण च युक्ता अपि सा सुन्दरी मुग्धा इव दृश्यते स्म । महाराजः तदेकदृष्ट्या पश्यन् अस्ति इति कारणतः सा लज्जया शिरः अवनमय्य स्थितवती ।

महाराजः अश्वतः अवतीर्य अश्वं भटानां हस्ते दत्त्वा 'आगच्छतु' इति ब्राह्मणम् अभिनयेन सूचयित्वा प्रासादं प्रविष्टवान् । ब्राह्मणः पुत्र्या सह महाराजम् अनुसृतवान् ।

महाराजः तौ विशालं प्रकोष्ठं नीत्वा उपवेशितवान् । स्वयं च पीठे उपविशन् - "इदानीं भवान् यत् वक्तुम् इच्छति तत् वदतु" इति ब्राह्मणम् उक्तवान् ।

ब्राह्मणः महाराजं पुनः नमस्कुर्वन् - "मम वचने दोषः अस्ति चेत् मां भवान् क्षाम्यतु । अहं केवलं विधेः दूतः सन् कार्यं कुर्वन् अस्मि । मम पुत्री यदा बाल्ये आसीत् तदा कश्चित् संन्यासी मम गृहम् आगतवान् आसीत् । सः मम पुत्रीं दृष्ट्वा - 'एषा यदा ज्येष्ठा भविष्यति तदा महाराज्ञी भविष्यति' इति उक्त्वा गतवान् । 'कस्यचित् निर्धनस्य पुत्री राज्यस्य महाराज्ञी भविष्यति इति यत् तत् महते आश्चर्याय एव खलु !' इति विचिन्त्य अहं तं विषयं विस्मृतवान् आसम् । सा यदा प्राप्तवयस्का जाता तदा



अहं विवाहार्थं वरान्वेषणम् आरब्धवान् । तस्मिन् समये तस्याः जातकं दृष्टवन्तः ज्योतिषिकाः अपि आश्चर्येण – 'एषा महाराज्ञी भविष्यति' इति उक्तवन्तः'' इति निवेदितवान् ।

एतत् वचनं श्रुत्वा महाराजः आश्चर्यचकितः सन् युवतिं दृष्टवान् । तदा सा पुनः लज्जया शिरः अवनमय्य स्थितवती ।

तदा ब्राह्मणः पुनः अपि – ''महाप्रभो ! अहं महाराजं भवन्तं केवलं जानामि । अतः एव अत्र आगतवान् । भवतः दर्शनम् अपि विधेः द्वारा जातम् इति चिन्तयामि अहम् । यदि भवान् अस्मिन् समये प्रासादतः अत्र न आगच्छेत् तर्हि न जाने, मम गतिः का अभविष्यत् इति । इदानीं मम पुत्रीं सुभद्रां भवते अर्पयामि । कृपया भवान् स्वीकरोतु'' इति महाराजं विनयपूर्वकं प्रार्थितवान् ।

''इदानीम् एव मम अनेकाः पत्न्यः सन्ति । भवतः वचनानुसारम् एताम् अहं परिणेष्यामि चेत् अपि एषा कथं महाराज्ञी भविष्यति ?'' इति महाराजः संशयेन ब्राह्मणं पृष्टवान् ।

''तत् सर्वं मया न ज्ञायते । सर्वं विधिनिर्णयानुगुणं भविष्यति'' इति उक्तवान् ब्राह्मणः ।

महाराजः मन्दहासेन ब्राह्मणस्य पुत्रीं दृष्टवान् । ततः सः राजभटानां द्वारा प्रासादस्य प्रधानपरिचारिकाम् आनाय्य – ''मम प्रत्यागमनपर्यन्तम् एतस्याः युवत्याः उपचारं भवती करोतु । एतस्याः किञ्चिदपि कष्टं यथा न भवेत् तथा एषा भवत्या द्रष्टव्या'' इति उक्तवान् ।

एतत्सर्वं दृष्ट्वा ब्राह्मणः ततः प्रस्थितः । तम् अश्रुपूर्णाभ्यां नेत्राभ्यां पश्यन्ती सुभद्रा– 'तात !' इति आहूतवती सकरुणम् ।

''पुत्रि ! मम कर्तव्यम् अहं कृतवान् । इतःपरं मया अत्र न भवितव्यम् । भवत्याः पितुः दायित्वं समाप्तम्'' इति ब्राह्मणः उक्तवान् ।

तदा सुभद्रा दुःखेन – ''तात ! मां विहाय भवान् मा गच्छतु'' इति उक्तवती ।

''तथा भवती किमर्थं वदति ? भवती अत्र एकाकिनी न । विधिः सर्वदा भवत्या सह तिष्ठति । सः विधिः एव सर्वदा भवतीं रक्षति अपि । भवती चिन्तां मा करोतु'' इति उक्त्वा तस्याः सान्त्वनं कृत्वा एकवारं

तां तृप्त्या दृष्ट्वा अश्रूणि मार्जयन् ततः गतवान् ।

पित्रा गतां दिशं पश्यन्तीं, मौनं रुदतीं सुभद्रां परिचारिकाः प्रासादस्य अन्तः नीतवत्यः ।

प्रासादे सुभद्रां दृष्ट्वा महाराज्ञीनां सर्वाः परिचारिकाः सेविकाः च परस्परं सम्भाषणं कृतवत्यः । ''एतस्याः सौन्दर्यात् ज्ञायते यत् एषा ग्रामीणा युवतिः न स्यात् इति । एषा वेषं परिवर्तितवती काचित् राजकुमारी एव स्यात्'' इति काचित् परिचारिका उक्तवती ।



''महाराजः एतां परिणेष्यति चेत् अन्याः महाराज्ञीः विस्मरिष्यति एव'' इति उक्तवती अन्या परिचारिका ।

पार्श्वे एव निलीय स्थिताः तिस्रः राज्ञ्यः अपि परिचारिकाणां वचनं श्रुतवत्यः । ताः असूयया दीर्घं निःश्वसत्यः अन्तःपुरं गतवत्यः ।

प्रधानपरिचारिका सुभद्रां महान्तं प्रकोष्ठं दर्शितवती । भोजनं कारयित्वा धर्तुं नूतनवस्त्राणि दत्तवती च ।

अनन्तरदिने प्रातः एव बिन्दुसारः प्रासादतः प्रस्थितवान् । यतः राज्यस्य सीमाप्रदेशेषु केचन महाराजाः आक्रमणार्थम् उद्युक्ताः आसन् । एतत् ज्ञात्वा राजा सैन्यं स्वीकृत्य प्रस्थितवान् आसीत् । सः मासद्वयानन्तरम् एव प्रासादं प्रत्यागतवान् । तस्य आगमनपर्यन्तम् अपि प्रधानपरिचारिका सुभद्रायै सर्वाः अनुकूलताः कल्पितवती आसीत् । परन्तु प्रत्यागतः महाराजः सुभद्रया सह किञ्चिदपि सम्भाषणं न कृतवान् आसीत् । अतः प्रधानपरिचारिका चिन्तितवती यत् - महाराजः सुभद्रां पूर्णतया विस्मृतवान् एव इति ।

'यदि महाराजः सुभद्रां परिणेष्यति तर्हि अस्मासु तस्य अनुरागः न्यूनः भविष्यति' इति तिस्रः महाराज्ञ्यः अपि चिन्तितवत्यः । अतः महाराजः यथा सुभद्रां विस्मरेत् तथा मन्त्रवादिनां द्वारा ताः मन्त्रप्रयोगं कारितवत्यः ।

महाराज्ञीनां वचनेन प्रभाविता प्रधानपरिचारिका अपि सुभद्रायाः उपेक्षां कृतवती । महाराज्ञीनाम् अलङ्करणं, तासां नखनिष्कासनम् इत्यादीनि कार्याणि सभद्रायाः द्वारा कारितवती सा । कार्याणि सम्यक् न करोति भवती इति महाराज्ञ्यः तां

दूषितवत्यः । एतत् सर्वम् अपि सा मौनं सोढवती, न तु कमपि किमपि उक्तवती । एवम् एव वर्षद्वयम् अतीतम् ।

एकदा सूर्योदयसमये महाराजः उद्याने सञ्चरन् आसीत् । तदा एकं कण्टकं तस्य पादे लग्नम् । तदा महाराजः तत्रैव आसने उपविश्य कञ्चित् भटम् आहूतवान् ।

''पादे कण्टकं लग्नम् अस्ति । शीघ्रं क्षौरिकम् आनयतु'' इति तम् उक्तवान् च ।

एतादृशकार्यकरणे क्षौरिकाः निपुणाः । परन्तु तस्मिन् समये प्रासादे तादृशः कोऽपि न आसीत् ।

भटाः सर्वत्र दृष्टवन्तः । तदा तैः सुभद्रा दृष्टा । ते ताम् उक्तवन्तः यत् - महाराजस्य पादात् कण्टकं निष्कासयतु इति ।

कम्पमाना सुभद्रा महाराजस्य समीपं गतवती । तस्य पादयोः समीपे भूमौ उपविश्य कण्टकं निष्कासितवती च ।

महाराजः तां पश्यन् - ''भवती का ? भवती प्रासादे कदापि न दृष्टा खलु मया ?'' इति पृष्टवान् ।

परन्तु सुभद्रा उत्तरं न दत्तवती । तस्याः नेत्राभ्याम् अश्रूणि आगतानि ।

''भवती कतिभ्यः दिनेभ्यः अत्र अस्ति ?'' इति पुनः तां पृष्टवान् महाराजः ।

तदा सुभद्रा दुःखस्य निग्रहणं कुर्वती - ''यदा मम पिता मां भवते अर्पितवान् तदारभ्य'' इति उक्तवती ।

महाराजः सावधानेन पुनः सुभद्रां दृष्टवान् । 'एतस्याः पिता मह्यम् एताम् अर्पितवान् आसीत्' इति सः स्मृतवान् । तं विषयं न स्मारितवत्यां परिचारिकायां तस्य अत्यन्तं कोपः आगतः । पुनः किञ्चित्कालानन्तरं स्वविस्मरणनिमित्तं स्वस्मिन् एव सः कोपं प्राप्तवान् । 'आत्मना कृतस्य दोषस्य निमित्तम् अन्यस्य दूषणात् न कोऽपि लाभः' इति विचिन्त्य सुभद्राम् उद्दिश्य - ''भद्रे ! भवत्याः विषये यत् अन्याय्यम् अनुष्ठितं तत् इदानीम् एव परिमार्जनीयम् । अतः सूर्यास्तात् पूर्वम् एव अहं भवतीं परिणेष्यामि'' इति उक्तवान् ।

ततः सः मन्त्रिणः, पुरोहितान् च आहूय प्रवृत्तं समग्रं निवेदितवान् । 'विवाहार्थं सज्जता क्रियताम्' इति तान् आज्ञापितवान् च । - (अनुवर्तते)






# ज्ञानी सुन्दरः

स्वीकृतं कार्यं मध्ये न परित्यक्तव्यम् इति चिन्तयन् दृढसङ्कल्पः त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान् । वृक्षतः शवम् अवतार्य, स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च ।

तदा शवान्तर्गतः वेतालः - "भोः राजन् ! भवान् केन कारणेन एतादृशं परिश्रमं करोति इति मया न ज्ञातम् । अस्मिन् लोके योगविद्यानिपुणाः अन्ये मन्त्रवादिनः च केषुचित् सन्दर्भेषु अपूर्वशक्तिं प्रदर्शयेयुः । परन्तु तादृशेषु अपि केचन स्वसमस्यानां परिहारार्थं समर्थस्य महाराजस्य साहाय्यं स्वीकुर्वन्ति इति तु आश्चर्यकरम् एव खलु । स्वसमस्यायाः परिहारार्थं कश्चित् योगी, मन्त्रवादी वा भवन्तम् आश्रितवान् तु न स्यात् खलु ? योगी सर्वदा प्रजोपकारी सन् जीवति । परन्तु मन्त्रवादी कीर्तेः,

## वेतालकथा



अधिकारस्य च व्यामोहकारणात् प्रजानां वञ्चनां करोति । एतस्य उदाहरणत्वेन सुन्दरनामकस्य कस्यचित् कथां श्रावयामि अहम् । एतस्मात् भवतः मार्गश्रमः अपि परिहृतः भवेत्'' इति अवदत् ।

अनन्तरं वेतालेन कथा आरब्धा -

बहुभ्यः वर्षेभ्यः पूर्वं मगधदेशस्य धर्मपुरीनामके ग्रामे सुन्दर-सुरेशनामकौ प्रतिवेशिनौ वसतः स्म । सुन्दरः धनिकः आसीत् । तस्य परिवारः अपि न आसीत् । ग्रामे बहूनां साहाय्यं कुर्वन् उत्तमं नाम प्राप्तवान् आसीत् सः ।

परन्तु सुरेशस्य स्थितिः एतस्मात् विपरीता आसीत् । तस्य परिवारः अपि महान् आसीत् । सः अधिकम् अपव्ययं करोति स्म । सर्वैः सह वृथा कलहं करोति स्म । स्वस्य हानिः भवति चेदपि चिन्ता नास्ति परन्तु अन्येषां लाभः कदापि न भवेत् इति सः चिन्तयति स्म । प्रतिवेशिनः तृप्त्या न जीवेयुः इति तस्य भावना आसीत् । सर्वेषां दृष्ट्या सः दुष्टः आसीत् ।

'सर्वे मां दुष्टं मन्यन्ते' इति सुरेशः जानाति स्म । परन्तु एतस्य कारणं मम दुर्गुणः इति सः न चिन्तयति स्म । ''मम प्रतिवेशिनः सर्वे सुन्दरस्य कारणतः एव मां दुष्टं मन्यन्ते । अतः एव सुन्दरः उत्तमकार्याणि कुर्वन् अस्ति'' इति सुरेशः सर्वान् वदति स्म ।

अथ कदाचित् सः ग्रामप्रमुखसमीपं गत्वा उक्तवान् - ''मम महान् परिवारः अस्ति । अतः समस्याः अपि अधिकाः एव । समस्याः विस्मर्तुम् अहं मद्यपानं करोमि । दानं कर्तुं धर्मं पालयितुं वा मम अपि इच्छा अस्ति । परन्तु अहं निर्धनः । सर्वैः सह उत्तमव्यवहारः करणीयः इति ममापि इच्छा अस्ति । परन्तु मनसि खेदः अस्ति इति कारणतः कलहं करोमि । एतत् सर्वं सुन्दरः जानाति चेदपि मम साहाय्यं न करोति सः । मम कष्टपरिहारः यदि भवेत् तर्हि अहं सज्जनः भवेयम् । तथा भवेत् चेत् सुन्दरस्य हानिः । अतः सः मम सज्जनत्वं सर्वथा न इच्छति'' इति ।

एतस्मात् सः प्रमुखः आश्चर्येण - ''भवान् उत्तमस्वभावं प्राप्नोति चेत् सुन्दरस्य का हानिः भवेत् ?'' इति सुरेशं पृष्टवान् ।

तदा सुरेशः - ''अङ्गारस्य पार्श्वे स्थितं भस्म अपि कौमुदी इव प्रकाशते ।

निरस्तपादपे देशे एरण्डोऽपि द्रुमायते । यत्र पण्डितः नास्ति तत्र कानिचन अक्षराणि यः जानाति सः एव पण्डितः । सुन्दरेण किम् उत्तमं कार्यं कृतम् अस्ति ? यत् किमपि अकृतवान् मादृशः प्रतिवेशी अस्मि इति कारणतः सः गौरवं प्राप्नोति । अत्र अन्यत् किमपि कारणं नास्ति'' इति उक्तवान् ।



एतत् वचनम् उचितम् इति भावितवान् ग्रामप्रमुखः । एतत् वचनं सर्वेषां द्वारा सुन्दरेण अपि ज्ञातम् । सुन्दरः झटिति एव ग्रामप्रमुखस्य समीपम् आगतवान् । सः ग्रामप्रमुखम् उक्तवान् यत् ग्रामस्य अन्यान् प्रमुखान् सुरेशं च आह्वयतु इति । यदा सर्वे आगताः तदा सुन्दरः सुरेशं पृष्टवान् - ''वर्षे भवतः आयः कियान् ? व्ययः च कियान् ? भवान् कियन्तम् ऋणं कृतवान् ?'' इति

तदा सुरेशः - ''मम प्रतिवर्षम् आयः शतरजतनाणकमितः, व्ययः च त्रिशत-रजतनाणकमितः । सहस्ररजत-नाणकात्मकम् ऋणम् अपि अस्ति मम'' इति उक्तवान् ।

एतत् श्रुत्वा सुन्दरः ग्रामप्रमुखम् उक्तवान् - ''स्वामिन् ! एतस्य सुरेशस्य ऋणपरिहारम् अहं करिष्यामि । मम तु प्रतिवर्षं सहस्ररजतनाणकपरिमितः आयः अस्ति । मम सम्पत्तिं भवते अर्पयामि । ततः प्रतिवर्षं भवान् पञ्चशतं रजतनाणकानि सुरेशाय ददातु । इतःपरं वा सुरेशः दुर्गुणं त्यक्त्वा परोपकारकार्यं करोतु । एतत् एव मम निवेदनम्'' इति उक्तवान् ।

एतस्मात् आश्चर्यचकितः ग्रामप्रमुखः - ''अन्येषां वचनं श्रुत्वा भवान् एतादृशं निर्णयं मा स्वीकरोतु'' इति यावत् उक्तवान् तावता सुन्दरः मध्ये उत्थाय - ''अहं बहुवारं सुरेशस्य साहाय्यं कृतवान् । परन्तु मम विषये सुरेशः एव अपप्रचारं कृतवान् । वस्तुस्थितिम् अहं वदामि चेदपि तत्र कोऽपि न विश्वसिति । सुरेशः दुष्टः इत्यत्र नास्ति संशयः । अस्माकं समाजे दुष्टस्य वचनस्य एव मौल्यम् अधिकम् इति एतस्मात् ज्ञायते । सुरेशः स्वस्य दुष्टत्वं स्वयम् एव अङ्गीकृतवान् अस्ति । तस्य कारणम् अपि तेन उक्तम् । मद्द्वारा सः सज्जनः भवति चेत् मम सन्तोषः एव । अतः एव एतादृशं कुर्वन् अस्मि'' इति उक्तवान् ।

ग्रामप्रमुखः सुन्दरस्य वचनं श्लाघमानः - ''सुरेशस्य उन्नतिनिमित्तं



भवता सूचितः मार्गः उत्तमः एव । इतःपरम् अपि यदि सः सज्जनः न भवति तर्हि तस्य योग्यता का इति जनैः स्वयं ज्ञायते । परन्तु भवतः सम्पत्तेः अर्धभागः सुन्दराय दीयते चेदपि अपरः अर्धभागः मदधीनः एव तिष्ठति खलु । तत् उपयुज्य भवान् अत्रैव स्थित्वा सुखेन जीवनं करोतु'' इति उक्तवान् ।

तदा सुन्दरः - ''यदि अहं तस्य पार्श्वगृहे निवसामि तर्हि सर्वे आवयोः तोलनं कुर्वन्ति । अतः सः उत्तमं नाम न प्राप्नोति । अन्यच्च मम लौकिकजीवने आसक्तिः नास्ति । अतः एव अहम् एतं ग्रामं त्यक्त्वा अरण्यं गमिष्यामि । तत्र मुनीनां सकाशात् ज्ञानार्जनं करिष्यामि च । मम अवशिष्टायाः सम्पत्तेः उपयोगं ग्रामाभिवृद्धिनिमित्तं कुर्वन्तु भवन्तः । एषः एव मम अन्तिमः निर्णयः'' इति वदन् अनुक्षणम् एव आवश्यकं पत्रं लिखित्वा ग्रामप्रमुखाय दत्तवान् । ग्रामतः प्रस्थितवान् च ।

ततः एकम् अरण्यं गत्वा सः तत्रत्यं कञ्चित् मुनिं दृष्टवान् । मुनिः कांश्चन प्रश्नान् पृष्टवान् । सुन्दरः यथायोग्यम् उत्तरं दत्तवान् ।

अनन्तरं सः मुनिः उक्तवान् - ''वत्सः बुद्धिमान् मानवः मार्गद्वयम् अन्विष्यति । प्रथमं तपसा मुक्तिसम्पादनम्, अपरं योगविद्यया ज्ञानसम्पादनम् । भवान् ज्ञानं सम्पादयितुम् उत्सुकः अस्ति । अतः भवान् महान् योगी सन् यथाशक्ति जनहितकार्यं करोतु'' इति ।

एतत् अङ्गीकुर्वन् सुन्दरः तस्य मुनेः शिष्यः जातः । एवम् एव कश्चन कालः अतीतः ।

तदा मगधदेशं महागुप्तः नाम महाराजः पालयति स्म । वर्षद्वयव्यापिन्याः अनावृष्टेः कारणतः राज्ये जलस्य, आहारस्य च अभावः उत्पन्नः आसीत् । तदा महाराजः खिन्नः सन् मन्त्रिभिः सह चर्चां कृतवान् । परन्तु कोऽपि कमपि परिहारं सूचयितुं न शक्तवान् ।

तस्मिन् समये एव सुन्दरः तत्र आगत्य महाराजं दृष्ट्वा तम् उक्तवान् - ''महाराज ! मम काचित् समस्या उद्भूता अस्ति । ऋते भवतः, अन्येन केनापि परिहर्तुं न शक्यते सा समस्या । भवान् यदि मम समस्यायाः परिहारं करिष्यति तर्हि अहं यथाशक्ति भवतः साहाय्यं करिष्यामि'' इति ।

सुन्दरस्य वेषभूषणं, मुखस्य तेजः च दृष्ट्वा 'एषः कश्चित् योगी' इति ज्ञातवान् महाराजः । अतः सः सुन्दरम् उक्तवान् - "महानुभाव ! भवतः समस्याम् अहं कर्तव्यबुद्ध्या परिहरिष्यामि । परन्तु भवान् मम समस्यां परिहर्तुं सर्वथा न शक्नुयात् । अतः भवतः साहाय्यस्य अपेक्षा मम नास्ति" इति ।

तदा सुन्दरः गाम्भीर्येण - "आदानप्रदानं मानवधर्मः अस्ति । भवतः समस्यां निश्चयेन अहं परिहरिष्यामि" इति उक्तवान् । तदा महागुप्तः देशस्य अनावृष्टिविषयम् सुन्दरम् उक्तवान् ।

एतत् श्रुत्वा सुन्दरः हसन् - "एतत् मम अत्यन्तं लघु कार्यम् । प्रकृतिशक्तयः केषाञ्चित् सूत्राणाम् आधारेण कार्यं कुर्वन्ति । वातावरणे अपेक्षितस्य आनुकूल्यस्य अभावतः अस्माकं राज्ये वृष्टिः नास्ति । केचन मन्त्राः उच्यन्ते चेत् तेषां प्रभावस्य कारणतः वातावरणे आनुकूल्यम् उत्पद्यते । तदर्थं प्रशस्तं स्थलं द्रष्टव्यम्" इति उक्तवान् ।

एतस्मात् आश्चर्यचकितः महागुप्तः - "मम राज्ये यदि भवतः कारणतः वृष्टिः भविष्यति तर्हि भवतः कनकाभिषेकं करिष्यामि" इति उक्तवान् ।

सुन्दरः किमपि उत्तरम् अदत्त्वा किञ्चित्कालं यावत् नेत्रे निमील्य - "रथः सिद्धः भवतु । शिवपुरग्रामे एतं यज्ञं कर्तुम् अनुकूलं स्थलम् अस्ति । तत्र गच्छाम तावत्" इति उक्तवान् ।

रथः सिद्धः अभवत् । तस्मिन् रथे सुन्दरः, महागुप्तः च उपविष्टवन्तौ । सुन्दरस्य आदेशानुसारं महागुप्तः निरायुधः आसीत् । रथः अग्रे प्रस्थितः । किञ्चिद्दूरं रथः यदा गतः तदा अश्वौ आक्रोशनं






•कुर्वन्तौ तत्रैव स्थितवन्तौ । तद् दृष्ट्वा सारथिः भयेन – "प्रभो ! अग्रे व्याघ्राणां समूहः एव अस्ति" इति उक्तवान् ।

सुन्दरः महागुप्तः च अग्रे दृष्टवन्तौ । किञ्चिद्दूरे एव द्वादश व्याघ्राः स्थिताः आसन् । कुत्रापि जलं नास्ति इति कारणतः जलान्वेषणार्थं ते तत्र आगताः आसन् । अश्वौ, त्रीन् जनान् च दृष्टवतां तेषाम् उत्साहः प्रवृद्धः आसीत् । 'एतस्मिन् समये मम समीपे आयुधानि न सन्ति खलु' इति महागुप्तः महतीं चिन्तां प्राप्तवान् । तावता सुन्दरः रथात् अवतीर्य, मन्त्रान् वदन् व्याघ्राणां समीपं गतवान् । महागुप्तः आश्चर्यचकितः सन् यावत् पश्यन् आसीत् तावता एकैकः व्याघ्रः अपि सुन्दरं नमस्कृत्य अरण्यस्य अन्तः अगच्छत् ।

तदा रथः अग्रे गतः । सुन्दरः रथम् आरुह्य – "क्रूरमृगाः अपि कानिचन सूत्राणि अनुसरन्तः जीवन्ति । शब्दजालेन तान् अपि निग्रहीतुं शक्नोति योगी" इति महागुप्तम् उक्तवान् ।

अनन्तरं किञ्चित्कालाभ्यन्तरे एव रथेन शिवपुरग्रामः प्राप्तः । तस्मिन् ग्रामे सर्वत्र बहवः जनाः महता सन्तोषेण आसन् । सुन्दरः तत्र गत्वा "कः विषयः ?" इति तान् पृष्टवान् ।

तेषु कश्चित् वृद्धः आश्चर्येण सुन्दरं पश्यन् – "भवान् एव खलु सः योगी ?" इति पृष्टवान् ।

तदा सुन्दरः – "आम्, सः योगी अहम् एव" इति तान् सूचितवान् ।

अनन्तरं सः वृद्धः उक्तवान् – "कश्चित् योगी ग्रामम् आगमिष्यति इति, शब्दयज्ञं कृत्वा वृष्टिं पातयिष्यति इति च ग्रामप्रमुखस्य स्वप्ने आगत्य काचित् ग्रामदेवता उक्तवती अस्ति । परन्तु अस्माकं ग्रामे भूकम्पः भविष्यति इत्यपि तया उक्तम् । तत् निरुद्ध्य तस्मात् ग्रामः रक्षणीयः चेत् तत्र स्थितस्य वटवृक्षस्य अधः स्थिता काचित् शिला अर्धपादपरिमितम् उपरि उन्नेतव्या । अत्रत्यजनाः प्रयत्नं कृतवन्तः चेदपि शिलां कम्पयितुं न शक्ताः" इति ।

तदा महागुप्तः अग्रे गत्वा तां शिलां दृष्टवान् । सा शिला महाकारिका भारयुता च आसीत् । बलशाली अपि तां शिलाम् उन्नेतुं न शक्नोति स्म ।

किं करणीयम् इति महाराजः यावत्

चिन्तयन् आसीत् तावता सुन्दरः शिलायाः समीपं गत्वा – ''महाराज ! एतत् कार्यं शरीरबलेन साधयितुं न शक्यते । ज्ञानशक्त्या पर्वतम् अपि चूर्णीकर्तुं शक्यते । अणुतः ब्रह्माण्डस्य सृष्टिः कर्तुं शक्यते । अहं ज्ञानशक्त्या एतां शिलाम् उन्नयामि'' इति वदन् कांश्चन मन्त्रान् उच्चारितवान् । अनुक्षणम् एव शिला अर्धपादमितम् उपरि गता । ग्रामस्थाः सर्वे अत्यन्तं सन्तुष्टाः ।

अनन्तरं सुन्दरः शब्दयज्ञं कृतवान् । तस्य समाप्तितः पूर्वम् एव आकाशः मेघैः आवृतः । अल्पे एव काले वृष्टिः आरब्धा । न केवलं शिवपुरग्रामे, अपि तु मगधराज्ये सर्वत्र वृष्टिः आगता ।

एतत् सर्वं दृष्ट्वा महागुप्तः चिन्तयन् सुन्दरम् उक्तवान् – ''महानुभाव ! भवान् सर्वशक्तिशाली । अवतारपुरुषः इव अस्माकं राज्यम् आगत्य प्रजानां कष्टं परिहृतवान् भवान् । अहं तु सामान्यः । भवतः समस्यां परिहर्तुं शक्नोमि वा न वा इति मम सन्देहः'' इति ।

तदा सुन्दरः हसन् सुरेशस्य कथां महागुप्तं श्रावितवान् । अनन्तरम् उक्तवान् च – ''योगिना सता अद्भुतशक्तिः सम्पादिता मया इति यदि सुरेशेन ज्ञायेत तर्हि सः मम आश्रमम् आगच्छेत् । योगविद्यां पाठयतु इति तत्र मां पीडयेत् च । योगविद्या-सम्बद्धानि बहूनि रहस्यानि अहं गोपितवान् अस्मि । मया अपि इतोऽपि अधिकानि रहस्यानि ज्ञातव्यानि सन्ति । अतः, सुरेशतः मम खेदः यथा न भवेत् तथा मम आश्रमस्य रक्षणं कल्पयतु इति अहं भवन्तं प्रार्थयामि'' इति ।

एतत् श्रुत्वा आश्चर्यचकितः महागुप्तः – ''व्याघ्रादीनां क्रूरमृगाणां नियन्त्रणं लीलया



कर्तुं शक्नोति भवान् । शिलाः अपि उन्नेतुं शक्यते भवता । प्रकृतिशक्तिम् आदेशेन निग्रहीतुम् अपि शक्यते भवता । एतादृशाय भवते एतादृशलघुविषये मम साहाय्यम् आवश्यकं भवेत् वा ?'' इति सुन्दरं पृष्टवान् ।

तदा सुन्दरः क्षणं यावत् मौनं स्थित्वा अनन्तरं महागुप्तं पश्यन् गाम्भीर्येण - ''राजन् ! राज्यस्य महाराजस्य उपस्थितौ यदि अहं दुर्जनेभ्यः दण्डनं ददामि तर्हि तत् उचितं न भवेत्'' इति उक्तवान् ।

अनन्तरं महागुप्तः प्रतिवचनम् अदत्त्वा सुन्दरस्य आश्रमस्य रक्षणव्यवस्थां कल्पितवान् । यथा सुरेशः तत्र न गच्छेत् तथा तस्मै आज्ञां प्रेषितवान् च ।

एवं वेतालः कथां समाप्य अवदत् - ''भोः राजन् ! सुन्दरः मन्त्रोच्चारणेन एव क्रूरमृगाणां नियन्त्रणं कृतवान् । शब्दयज्ञेन वृष्टिं पातितवान् । एतत् सर्वं निपुणः योगी एव कर्तुं समर्थः भवति । परन्तु अत्र मम कश्चन सन्देहः अस्ति यत् एतादृशः महान् शक्तिमान् कश्चित् दुर्जनं शिक्षितुं न शक्नोति । सः एतदर्थं महाराजस्य साहाय्यं स्वीकरोति इति तु आश्चर्यकरम् एव खलु । सुन्दरेण यत् कार्यं कृतं तत् सर्वं क्षुद्रमान्त्रिकशक्तिद्वारा जातं स्यात् वा ? एतेषां सन्देहानां समाधानं भवान् जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्त्रधा भग्नं भवेत्'' इति अवदत् ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः - ''मानवाय बुद्धिशक्तिः विवेचनाशक्तिः वाक्शक्तिः च भगवता एव दत्ता भवति । एतेषाम् उपयोगः केषाञ्चित् सूत्राणां द्वारा येन क्रियते सः सन्मार्गी इति उच्यते । दुर्मार्गिणः व्यवहारः किमपि सूत्रं न अवलम्बते । सुन्दरः स्वयोगविद्याबलेन सुरेशं दण्डयितुम् अशक्ष्यत्, न तु तस्य बुद्धिपरिवर्तनं कर्तुम् । अन्यच्च यः योगी भवति तेन स्वार्थनिमित्तं अन्ये न दण्डनीयाः । दण्डिताः चेत् तस्य योगशक्तिः न्यूना भविष्यति । अतः एव सुन्दरः महाराजस्य साहाय्यं स्वीकृतवान्'' इति ।

एव वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् आश्रितवान् ।






## समुद्रतीरप्रयाणम् - १५

# मन्नारुखातस्य उत्तरभागः

रचना - मीरा नायर् ◆ चित्रम् - गोपकुमारः

कन्याकुमारीतः वयं समुद्रतीरम् अनुसरन्तः पूर्वतीरे उत्तराभिमुखं प्रयाणं यदि अनुवर्तयामः तर्हि आदौ मन्नारुखातं प्राप्नुमः ।

मन्नारुखातस्य आरम्भे एव मुख्यभूमौ तिरुच्चेन्दूरुनामकं नगरम् अस्ति । अत्र समुद्राभिमुखम् एकं सुविशालं सुब्रह्मण्यस्वामिमन्दिरम् अस्ति । एषः आलयः प्रमुखेषु षट्सु सुब्रह्मण्यमन्दिरेषु अन्यतमः अस्ति । अन्ये पञ्च आलयाः अपि पर्वतशिखरे सन्ति । एषः देवालयः एकः एव समतलभूमौ अस्ति । सहस्राधिकवर्षेभ्यः पूर्वम् एव निर्मितस्य एतस्य आलयस्य प्राङ्गणे शतकत्रयात् पूर्वं निर्मितं नवाट्टात्मकं महागोपुरम् अस्ति । भक्ताः धर्मतुलां वहन्तः देवालयम् आगत्य श्रद्धया पूजां समर्पयन्ति ।

तिरुच्चेन्दूरुतः अनतिदूरे तूत्तुकुडि (ट्युटिकोरिन्) अस्ति । १९७४तमे वर्षे जुलैमासस्य ११ दिनाङ्के केन्द्रसर्वकारेण घोषितं यत् एतत् अस्मद्देशस्य दशमं प्रमुखनौकास्थानम् अस्ति इति । एतस्य कारणतः तमिळुनाडुराज्येन - 'प्रमुखनौकास्थानद्वययुक्तम् अद्वितीयं राज्यम्' इति ख्यातिः प्राप्ता अस्ति । अत्रत्यं नौकास्थानं कृत्रिमं, सर्वविधवातावरणे अपि उपयोक्तुम् अर्हं च । समुद्रतरङ्गाणाम् आहतितः रक्षणार्थम् एतस्य दक्षिणोत्तरभागयोः दृढा अवरोधकभित्तिः निर्मिता अस्ति । उत्तरभागीया भित्तिः ४०९६ मीटर् - दैर्घ्ययुता सती 'प्रपञ्चस्तरे दैर्घ्येण द्वितीया' इति ख्यातिं गता अस्ति ।

प्राचीनकालात् अपि अस्मद्देशः मौक्तिककारणतः ख्यातः अस्ति । द्वितीये क्रिस्तशतके एव स्मद्देशः सुदूरस्थं रोम्साम्राज्यं प्रति अपि मौक्तिकानि प्रेषयति स्म । तानि मौक्तिकानि प्रायः मन्नारुखाते प्राप्तानि

श्रीसुब्रह्मण्यस्वामिमन्दिरम्



एव भवन्ति स्म । तूत्तुकुडिनगरम् अद्यापि मौक्तिकवाणिज्यकेन्द्रत्वेन ख्यातम् अस्ति । लवणनिर्माणम्, गोभरनिर्माणं, विद्युदुत्पादनम् इत्यादयः अपि अत्र प्राधान्येन प्रचलन्ति ।

हिन्दुजनैः परमपवित्रत्वेन भाव्यमानं रामेश्वरक्षेत्रं मन्नारुखाततः उत्तरभागे अस्ति । चतुर्धामसु अन्यतमम् अस्ति रामेश्वरक्षेत्रम् (अन्यानि त्रीणि तावत् - बदरीनाथः, द्वारका, पुरी च) धर्मभीरवः हिन्दुवः भावयन्ति यत् जन्मनि एकवारं वा रामेश्वरक्षेत्रस्य दर्शनं करणीयम् एव इति । रामायणकथायाः एतस्य द्वीपस्य च कश्चन सम्बन्धः अस्ति । श्रीरामस्य नाम्नः कारणतः एव 'रामेश्वरम्' इति नाम आगतम् इति कथा श्रूयते । काचित् कथा एवं श्रूयते - ब्राह्मणकुलीयस्य रावणस्य संहारः कृतः यत् ततः आगतस्य पापस्य परिहारार्थं श्रीरामः अत्र शिवपूजां कृतवान् इति । 'कैलासतः 'शिवलिङ्गम् आनयतु' इति हनूमन्तम् आदिष्टवान् आसीत् रामः । कैलासं गतः हनूमान् दीर्घकालानन्तरम् अपि न प्रत्यागतः । पूजाकालः सन्निहितः चेदपि हनूमान् न आगतः । 'पुण्यकालसमाप्तितः पूर्वं सिकताभिः लिङ्गं निर्माय वा शिवपूजां निर्वर्तयतु' इति सूचितवती सीता । एतत् अनुसृत्य रामः सिकताभिः लिङ्गं निर्माय पूजितवान् । पूजासमाप्त्यनन्तरम् आगतः हनूमान् नितरां खिन्नः । तस्य खेदस्य अपनयनार्थं श्रीरामः तं सूचितवान् यत् मया प्रतिष्ठापितं सैकत-लिङ्गम् अपनीय कैलासात् भवता आनीतं लिङ्गं प्रतिष्ठापयतु इति । हनूमान् सैकतलिङ्गम् उन्नेतुं प्रयत्नं कृतवान् । किन्तु तेन तत् कर्तुं न शक्तम् । कुपितः सः पुच्छेन बद्ध्वा बलात् आकृष्टवान् । तथापि लिङ्गं विचलितं न जातम् । तदा श्रीरामः तं सान्त्वनवचनानि उक्त्वा - 'एतस्य पार्श्वे एव कैलासीयलिङ्गम् अपि प्रतिष्ठापयतु' इति संसूच्य कैलासलिङ्गस्य एव प्रथम-पूजा भवेत्' इति



*शिवलिङ्गम् उन्मूलयितुं प्रयतमानः हनूमान्*



रामेश्वरदेवालयः

आदिष्टवान् । अतः एव अद्यापि जनाः आदौ हनूमता प्रतिष्ठापितं 'काशीविश्वनाथ-रामनाथस्वामिलिङ्गं' पूजयित्वा एव 'रामलिङ्गं' पूजयन्ति ।

यत्र श्रीरामेण शिवपूजा कृता इति विश्वस्यते तस्मिन् स्थले सेतुपतिराजवंशीयः उदयनः नाम राजा १५ शतके सुविशालं देवालयं निर्मितवान् । एतस्मिन् देवालये अपूर्वाभिः शिल्पकलाकृतिभिः युक्तैः सहस्रस्तम्भैः उपेतः १२०० पादविस्तृतः मण्डपः अस्ति । अस्मद्देशे स्थितेषु मण्डपेषु एषः एव सुविशालः ।



रामेश्वरस्य विशालमण्डपः

एतम् आलयं दशमः सिक्खगुरुः गोविन्दसिंहः सन्दृष्टवान् आसीत् इति कथा श्रूयते । अतः एव एतत् क्षेत्रम् अन्येषाम् इव सिक्खानाम् अपि पवित्रम् अस्ति ।

रामेश्वरक्षेत्रं समुद्रप्राणिशास्त्रपरिणतान् अपि विशेषतः आकर्षति । एतद्द्वीपपरिसरे हवलानां मध्ये वसतां विविधजीविनां जीवनक्रमादीनाम् अध्ययनं कर्तुं विज्ञानिनः परिशोधकाः अत्र तदा तदा आगच्छन्ति ।

रामेश्वरात् आग्नेयदिशि स्थितस्य धनुष्कोटेः समीपे अस्ति श्रीलङ्कादेशः । 'धनुष्कोटिः' इत्यस्य पदस्य अर्थः 'धनुषः अग्रभागः' इति । अत्रत्यं समुद्रतीरं धनुराकारेण (वक्राकारेण) अस्ति इत्यतः एतस्य प्रदेशस्य एतत् नाम जातम् अस्ति । अत्रत्ये कोदण्डरामस्वामिदेवालये सीतारामलक्ष्मणहनूमद्भिः सह रावणसहोदरस्य विभीषणस्य विग्रहः अपि अस्ति । एवं हि श्रूयते यत् यत्र विभीषणः श्रीरामं शरणं गतः तत्रैव एषः आलयः निर्मितः अस्ति इति ।



धनुष्कोटिस्थाः सिकताप्रदेशाः 'रावणश्मश्रु'नाम्ना निर्दिश्यमानाः गुल्माः च । एते गुल्माः एव सिकताप्रसारस्य अवरोधकाः भवन्ति ।

रामेश्वरद्वीपसमीपे एव अनेके सिकताशैलाः सन्ति । श्रीरामः लङ्कां प्रति गमनार्थं निर्मितायाः सेतोः अवशेषाः एते इति जनाः भावयन्ति । भूगर्भशास्त्रज्ञाः एतान् दृष्ट्वा अभिप्रयन्ति यत् एते सिकताशैलाः भारत-श्रीलङ्कयोः भौगोलिकसम्बन्धं प्रमाणीकुर्वन्ति इति । ३० मीटर्-उन्नताः एते सिकताशैलाः महानौकासञ्चारे विघ्नम् उत्पादयन्ति ।



शिवपार्वत्योः आशीर्वादं प्राप्नुवन् अगस्त्यमुनिः ।

रामेश्वरात् निर्गत्य आक्जलसन्धिः अतिक्रान्तः चेत् कोडिकरै प्राप्यते । कोडिकरैसमीपे आकाशे डयमानाः फ्लेमिङ्गपक्षिणः दृष्टिगोचराः भवन्ति । अत्रत्ये 'पक्षिधाम्नि' अनेकविधाः पक्षिणः भवन्ति कोडिकरैसमीपे एव 'वेदाराण्यं' नाम तीरनगरम् अस्ति । स्वातन्त्र्यप्राप्तेः अनन्तरं गवर्नर्जनरल्-पदवीम् अलङ्कृतवान् सि.राजगोपालाचारिवर्यः स्वातन्त्र्य-सङ्ग्रामकाले अत्रैव लवणसत्याग्रहं कृतवान् आसीत् इत्यतः एतस्य वेदारण्यस्य राजनैतिकवैशिष्ट्यम् अपि अस्ति । वेदारण्यस्थः शिवदेवालयः नितरां प्रसिद्धः । अत्रत्यौ शिवपार्वतीविग्रहौ वधूवरवेषेण अलङ्क्रियेते सदापि । पार्वतीसमेतः परमेश्वरः विवाहवैभवसहितं दर्शनं महामुनये अगस्त्याय दत्तवान् आसीत् इति अत्रत्यात् स्थलपुराणात् ज्ञायते । अतः एव वेदारण्यस्य 'दक्षिणकैलासः' इत्यपि ख्यातिः अस्ति ।

**कोडिकरै**





# राक्षसश्रेष्ठः

राजा विक्रमसेनः चन्द्रपुरं परिपालयति स्म । विलासप्रियः सः राज्यपरिपालने आसक्तिमान् न आसीत् । राज्यपालनभारं मन्त्रिणि आरोपितवान् आसीत् सः । अतः परिपालनक्रमे उत्कोचस्वीकरणादयः दुर्व्यवहाराः प्रवृद्धाः अभवन् ।

तस्मिन् राज्ये सिंहबलनामकः कश्चित् युवकः आसीत् । मातापितृविहीनः सः महता परिश्रमेण विद्याभ्यासं समापितवान् आसीत् । सैन्ये प्रवेशार्थम् अत्यावश्यिकाः क्षत्रियविद्याः अपि जानाति स्म सः ।

कदाचित् सिंहबलः राजभवने उद्योगं कर्तुम् इच्छन् महाराजं द्रष्टुं गतवान् । किन्तु तत्र सः प्रवेशं न प्राप्तवान् । यतः तत्रत्याः मन्त्रिणः सिंहबलम् उत्कोचं पृष्टवन्तः । दरिद्रः सः उत्कोचदाने असमर्थः आसीत् । तस्मात् तं ततः प्रतिप्रेषितवन्तः मन्त्रिणः ।

एतस्मात् नितरां खिन्नस्य सिंहबलस्य महाराजविषये मन्त्रिणां विषये च जुगुप्सा उत्पन्ना । सः पुनः कुत्रापि उद्योगार्थं न प्रयतितवान् । अन्ते सः निश्चितवान् यत् इतःपरं मृगयया एव जीवनं निर्वक्ष्यामि इति । अतः सः धनुर्बाणादिकं स्वीकृत्य राज्यसीमायां यत् दण्डकारण्यम् आसीत् तत्र गतवान्, प्राणिनः मारयन् तानेव खादन् जीवनयापनम् आरब्धवान् च ।

कानिचन वर्षाणि अतीतानि । राजा विक्रमसेनः अस्वस्थः सन् शय्याम् आश्रितवान् । दिनेषु अतीतेषु तस्य आरोग्यं चिन्ताजनकं जातम् । बहवः राजवैद्याः तं परीक्ष्य औषधं दत्तवन्तः । किन्तु तेन किमपि प्रयोजनं न जातम् । अन्ते रत्नाकरनामकः कश्चित् राजवैद्यः राजानं परीक्ष्य उक्तवान् - ''महाराज ! अमृतलता नाम काचित् मूलिका वर्तते । तस्याः उपयोगेन भवतः रोगः शमयितुं शक्यः ।

'अनामिका'



किन्तु सा लता अतीव दुर्लभा'' इति ।

एतत् श्रुत्वा तत्रैव स्थितः विक्रमसेनस्य पुत्रः अग्निसेनः रत्नाकरम् उक्तवान् - ''अमृतलतायाः स्वरूपं किम् ? कस्मिन् प्रदेशे लभ्यते सा ? प्राणपणेन वा अहं तां लताम् आनेष्यामि एव'' इति ।

तदा रत्नाकरः अग्निसेनम् अमृतलतायाः स्वरूपं विवृतवान् । 'सा लता च राज्यस्य पूर्वदिशि विद्यमाने अरण्ये उपलभ्यते' इति उक्तवान् च ।

दण्डकारण्यम् अत्यन्तं भयजनकं स्थलम् इति चन्द्रपुरस्थैः सर्वैः अपि ज्ञातम् एव आसीत् । पूर्वं कदाचित् युवराजः अग्निसेनः धैर्येण कैश्चित् भटैः सह मृगयार्थं तं प्रदेशं गतवान् आसीत् । किन्तु तत्र मृगया दूरे तिष्ठतु नाम, क्रूरमृगेभ्यः, विषसर्पेभ्यः च भीतः सः कथञ्चित् प्राणान् रक्षन् ततः पलायितवान् आसीत् । तेषु एव दिनेषु सः अरण्यवासिनां द्वारा श्रुतवान् आसीत् यत्-शूरः निर्भयः च सिंहबलः तस्मिन् दण्डकारण्ये एव निवसति इति ।

अतः अग्निसेनः भटानां द्वारा सिंहबलम् आनायितवान् । सिंहबलः अपि अग्निसेनं सम्यक् जानाति स्म । पिता विक्रमसेनः विलासप्रियः इति, पुत्रः अग्निसेनः प्रजानां विषये अत्यन्तं क्रूरतया व्यवहरति इति च ज्ञानम् आसीत् सिंहबलस्य ।

अग्निसेनः सिंहबलं यथोचितं सत्कृत्य - ''सिंहबल ! अमृतलतानामिकया मूलिकया रोगः शमयितुं शक्यः इति राजवैद्येन उक्तम् अस्ति । अतः तस्याः मूलिकायाः आनयने भवतः साहाय्यम् अपेक्ष्यते । भवान् यावत् इच्छति तावत् धनं दास्यामि'' इति उक्त्वा वैद्येन उक्तं मूलिकास्वरूपं विवृतवान् ।

तदा सिंहबलः उक्तवान् - ''युवराज ! धनदानविषये चिन्तां मा करोतु । मम दृष्ट्या परोपकारः एव महती सम्पत् । अतः अहम् अवश्यं भवतः साहाय्यं करिष्यामि'' इति ।

अनन्तरदिने अग्निसेनः सिंहबलः च अश्वारूढौ दण्डकारण्यं प्रति प्रस्थितवन्तौ । चतुर्णां दिनानां प्रयाणस्य अनन्तरं तौ राजवैद्येन सूचितं प्रदेशं प्राप्तवन्तौ ।

सिंहबलः महता उत्साहेन अग्निसेनम् उक्तवान् - ''युवराज ! वैद्येन सूचितः प्रदेशः आवाभ्यां प्राप्तः इदानीम् । अमृतलता लघ्वाकारिका खलु भवति ? अतः अश्वस्य उपरि एव उपविश्य मूलिकायाः अन्वेषणं क्लेशाय भवेत् ।

अतः आवां पादाभ्याम् एव गच्छन्तौ मूलिकायाः अन्वेषणं करवाव'' इति ।

अग्निसेनः एतत् अङ्गीकृतवान् । अनन्तरम् उभौ अपि अश्वात् अवतीर्य वृक्षे अश्वौ बद्ध्वा अमृतलतायाः अन्वेषणम् आरब्धवन्तौ ।

तस्य प्रदेशस्य पार्श्वे पर्वतस्थायां गुहायां रक्ततर्पणनामकः राक्षसः वसति स्म । रक्ततर्पणः राक्षसेषु एव उत्तमजातीयः आसीत् । अधमकुलीयाः राक्षसाः इव सः यं कमपि प्राणिनं मारयित्वा बुभुक्षाशमनं न करोति स्म । तथा करणं हीनकर्म इति तस्य अभिमतम् आसीत् । सः शपथं कृतवान् आसीत् –'मम जीवितावधौ मया एकः एव मनुष्यः भक्षणीयः' इति ।



रक्ततर्पणः अग्निसेनं सिंहबलं च दृष्ट्वा महता उत्साहेन उत्प्लुत्य उच्चस्वरेण गर्जन् अग्निसेन-सिंहबलयोः समीपम् आगतवान् । तस्य गर्जनस्य श्रवणात् एव सिंहबलस्य अग्निसेनस्य च शरीरे कम्पनम् आरब्धम् । अग्निसेनः भयात् मूर्च्छां गच्छन् - ''सिंहबल ! इदानीम् आवां किं करवाव ? सः वैद्यः रत्नाकरः रक्ततर्पणस्य आहाररूपेण आवाम् अर्पयितुम् इच्छन् अमृतलतायाः कथां कल्पितवान् स्यात् इति मम सन्देहः । इदानीं भगवान् एव अस्मान् रक्षेत्'' इति उक्तवान् ।

अग्निसेनः यथा न पतेत्, तथा तं गृहीत्वा सिंहबलः - ''युवराज ! भवतः पितुः विलासप्रियता, भवतः क्रूरत्वं च सर्वे अपि जानन्ति एव । एषः राक्षसः अपि महान् क्रूरी इति मया श्रुतम् । इदानीम् आवयोः रक्षणदायित्वं भगवते यत् अर्प्यते इति तत् उचितं न । आवयोः शौर्यस्य परीक्षाकालः इदानीम् । एतस्यां परीक्षायाम् आवाभ्यां जयः प्राप्तव्यः । कोषतः खड्गं निष्कासयतु'' इति वदन् रक्ततर्पणं लक्ष्यीकृत्य बाणप्रयोगार्थम् उद्युक्तः ।

तावता रक्ततर्पणः तयोः समीपम् आगत्य बाणप्रयोगार्थम् उद्युक्तं सिंहबलं पलाय्यमानम् अग्निसेनं च एकेन एव हस्तेन गृहीत्वा - ''हाँ, अद्य मम शपथः पूर्णः भविष्यति । किन्तु इदानीं काचित् समस्या । मम जीवितावधौ मया एकः एव मनुष्यः खादनीयः, न तु द्वौ । परन्तु इदानीं द्वौ लब्धौ । किं करवाणि ?'' इति स्वगतं वदन् उभौ अपि पुनः पुनः अवलोकितवान् ।

तदा सिंहबलः तम् उक्तवान्

''राक्षसोत्तम ! भवतः धर्माधर्मविवेचन-शक्तिं दृष्ट्वा अहम् अतीव सन्तुष्टः । अनारोग्येण शय्याम् आश्रितवतः चन्द्रपुरराज्यस्य राज्ञः चिकित्सार्थम् अमृतलतायाः अन्वेषणं कुर्वन्तौ आवाम् अत्र आगतवन्तौ । एषः अग्निसेनः अस्य राज्यस्य युवराजः । मूलिकायाः स्थानं ज्ञातं चेत्, तत् स्वीकृत्य युवराजः इतः गमिष्यति । अनन्तरं भवान् मां खादितुम् अर्हति । तेन भवतः शपथः पूर्णः भविष्यति'' इति ।

अनुक्षणं राक्षसः तौ उभौ अपि अधः अवतार्य - ''अमृतलता अस्मिन् प्रदेशे एव उपलभ्यते । अहं दास्यामि । किन्तु इदानीं मम कश्चन सन्देहः । प्रपञ्चे ज्येष्ठानां निमित्तं पुत्रैः त्यागकरणम् उचितम्, युक्तं च । किन्तु एषः युवराजः भवन्तं बलिरूपेण दत्त्वा स्वप्राणान् रक्षितुम् इच्छति इति यत् तत् धर्मसम्मतं वा ?'' इति पृष्टवान् ।

एतत् श्रुत्वा अग्निसेनः राक्षसस्य पादयोः प्रणम्य उक्तवान् - ''राक्षसेन्द्र ! भवान् वचसा एव मयि विवेकम् उत्पादितवान् । 'धर्माचरणं सामान्यजनानां कर्तव्यम् । महाराजः तदतिरिक्तः एव' इति चिन्तयन् अहम् अहङ्कारेण व्यवहृतवान् । कृपया अमृतलतां सिंहबलाय दत्त्वा तं प्रेषयतु । मां खादतु'' इति ।

अग्निसेनस्य वचनानि श्रुत्वा राक्षसः अट्टहासं कुर्वन् - ''भवतः कथनानुसारं मया भवतोः अन्यतरस्य विषये दया प्रदर्शनीया । किन्तु दया तु राक्षसानां स्वभावः न । तद्विरुद्धस्वभावः राक्षसानाम् । तथापि भवतोः निमित्तं मम स्वभावं परिवर्त्य त्यागं कुर्वन् अस्मि । आगच्छतां माम् अनुसृत्य'' इति वदन् किञ्चिद्दूरं तौ नीतवान् । गुल्मानां समीपे प्रवृद्धानि अमृतलतासस्यानि उत्पाट्य ताभ्यां यच्छन् राक्षसः - ''यथेच्छं लताः स्वीकुरुताम् । राज्ञः चिकित्सा क्रियताम् । मम शपथः तु केवलशपथरूपेण एव अवशिष्टः अभवत् । कार्यान्वितः न जातः एव'' इति वदन् दीर्घं निःश्वसन् स्वगुहायाः दिशि प्रस्थितवान् ।

अनन्तरं सिंहबलः, युवराजः अग्निसेनः च आनन्देन अश्वम् आरुह्य नगरं प्रतिप्रस्थितवन्तौ ।





# सुवर्ण-समयः -९

## प्रपञ्चे एतान् वयं कुत्र द्रष्टुं शक्नुयाम...?

### ... कोला भल्लूकाः

कोलाभल्लूकस्य अपत्यानि काङ्गरू-अपत्यानि इव जन्मानन्तरं षट् मासान् मातुः उदरस्य अधः स्थिते स्यूताकारके भागे तिष्ठन्ति ।
आहारस्वीकारसमये कोलाहलं कुर्वताम् एतेषां मुख्यः आहारः यूकलिप्टस् - वृक्षीयाणि पर्णानि । एते कोलाभल्लूकाः कुत्र वसन्ति ?





### ... समुद्रकन्यकायाः विग्रहः

विश्वविख्यातस्य बालसाहित्यनिर्मातुः हन् क्रिश्चियन्-याण्डर्सनूवर्यस्य ज्ञापकरूपेण कश्चन समुद्रकन्यकाविग्रहः प्रतिष्ठापितः अस्ति । एषः कांस्यविग्रहः कस्यचित् नौकास्थानस्य द्वारप्रदेशे अस्ति । इदानीं भवन्तः वदन्तु - सः कुत्र अस्ति इति ।

### ... सिक्थप्रतिमानां प्रदर्शनशाला

मेरिट्टुस्साड्नामिका काचित् फ्रेञ्चदेशीया महिला १९३४तमे वर्षे एकं वस्तुसङ्ग्रहालयम् आरब्धवती । दिने दिने प्रवर्धमानः सः सङ्ग्रहालयः इदानीं 'प्रसिद्धव्यक्तीनां सिक्थप्रतिमानां प्रदर्शनशाला' इति प्रसिद्धिं गतः अस्ति । सः वस्तुसङ्ग्रहालयः कुत्र अस्ति ?



### ... स्वर्णद्वारसेतुः

स्वर्णद्वारसेतुः सुन्दरतमत्वेन प्रपञ्चे विख्यातः अस्ति । एतस्य दैर्घ्यं १२२० मीटरात्मकम् । एषः सेतुः १९३७तमे वर्षे निर्मितः । एतस्य सेतोः क्रमणं कर्तुम् इच्छुभिः कः प्रदेशः गन्तव्यः ?





# प्रश्नावली



१ उभौ अरबदेशीयौ प्रयाणनिरतौ आस्ताम् । तयोः एकस्य समीपे तिस्रः रोटिकाः आसन् । अपरस्य समीपे पञ्च रोटिकाः आसन् । मार्गे तृतीयः कश्चन मिलितः । तस्य समीपे रोटिकाः न आसन् । किन्तु सः नितरां बुभुक्षितः आसीत् । एतौ अरबदेशीयौ तं भोजनार्थम् आहूतवन्तौ । अष्ट रोटिकाः सम-रूपेण त्रिधा विभज्य त्रयः अपि सन्तोषेण खादितवन्तः । आहारं प्राप्तवान् तृतीयः सन्तुष्टः सन् प्रतिफलरूपेण अष्ट रजतनाणकानि दत्त्वा गतवान् । एताभ्याम् अरबदेशीयाभ्यां तानि कथं न्याय्येन मार्गेण विभज्य स्वीकरणीयानि ?





२ एकस्य लघुछत्रस्य अधः त्रयः स्थूलकायाः पुरुषाः परस्परं संलग्नतया स्थित्वा गच्छन्तः सन्ति । किन्तु तेषु कोऽपि आर्द्रः तु न भवति । किमर्थम् ?

३ जर्मन्देशीयाः कदलीत्वचं किं कुर्वन्ति ?

४ एकं लोकयानं प्रस्थानसमये रिक्तम् आसीत् । प्रथमे स्थानके १६ जनाः तत् आरूढवन्तः । अनन्तरं यदा यानं स्थगितं तदा ७ जनाः आरूढवन्तः, त्रयः अवतीर्णाः च । अनन्तरस्थानके ९ जनाः आरूढवन्तः । पञ्च जनाः अवतीर्णाः च । अग्रे यदा यानं स्थगितं तदा ५ जनाः आरूढवन्तः, त्रयः अवतीर्णाः च । अन्तिमस्थानके उभौ अवतीर्णौ । एवं तर्हि यानेन कतिषु स्थानकेषु स्थितम् आसीत् ।

५ त्रीणि करवस्त्राणि सन्ति । तेषु उभे श्वेतवर्णीये । एकं च रक्तवर्णीयम् । एतानि परस्परं ग्रन्थिना योजितानि सन्ति । एकं श्वेतवस्त्रं मध्ये यथा स्यात्, तस्य पार्श्वयोः क्रमेण श्वेतरक्तवर्णीयौ यथा स्यातां तथा ग्रन्थिबन्धनं कृतम् अस्ति । रक्तवर्णीयं करवस्त्रं मध्ये यथा स्यात् तथा कर्तुं किं वा करणीयम् ?



६ शब्दवाहिन्याः विघ्नानां निवारणार्थं मनुष्येण सज्जीकृतम् सर्वप्रथमम् उपकरणं किम् ?

७ अचिरात् एव जलेन पूरितः चषकः मया हस्तेन ताडितः । चषकात् बिन्दुमात्रम् अपि जलं न पतितम् । किन्तु उत्पीठिकावस्त्रं तु आर्द्रं जातम् आसीत् । एतत् कथम् ?

८ युद्धकारणतः नाशं गते ग्रामे केचन एव अवशिष्टाः आसन् । प्रतिदिनं प्रतिजनं लीटर्परिमितं जलं सेवितं चेत् जलसङ्ग्रहः १३ दिनानि यावत् उपयोगाय भवेत् इति तैः ज्ञातम् । पञ्चमे दिने प्रमादवशात् किञ्चित् जलम् अधः पतितम् । तस्मिन् एव दिने कश्चित् व्रणितः जनः स्वभागीयं जलं पीत्वा दिवं गतः । तदनन्तरकाले जलस्वीकारपरिमाणे परिवर्तनं किमपि न कृतम् । यथाचिन्तितं तथा १३ दिनान्तं यावत् जलस्य उपयोगः जातः । एवं तर्हि पतितं जलं कियत्परिमाणकम् आसीत् ?



९ **न्यायालयीयं नाटकम्**

लोकयाने प्रयाणं कुर्वन् बसवराजः हठात् यानस्य स्थगनात् आसनात् पतितः । तस्य दक्षिणहस्तः क्षतिग्रस्तः जातः । 'एतं हस्तम् इतःपरम् अहम् उपयोक्तुं न अर्हामि । अतः परिहारधनरूपेण मह्यं दशलक्षं रूप्यकाणि दातव्यानि परिवहणसंस्थया' इति न्यायालये अभियोगं कृतवान् बसवराजः । परिवहणसंस्थाप्रतिनिधिः न्यायवादी न्यायालये बसवराजं पृष्टवान् - "इदानीं भवान् हस्तम् कियदुन्नतम् उन्नेतुं क्नोति ?" इति । बसवराजः स्कन्धपर्यन्तं हस्तम् उन्नीतवान् । "अपघातात् पूर्वं भवान् हस्तं कियत्पर्यन्तम् उन्नेतुं शक्नोति स्म ?" इति पृष्टवान् न्यायवादी । बसवराजः दक्षिणहस्तं शिरसः उपरि उन्नीय दर्शितवान् । तदा न्यायवादी - "एषः असत्यवादी अस्ति । एतेन हस्तः इदानीम् अपि शिरसः उपरि अपि उन्नेतुं शक्यते इति तु सर्वैः प्रत्यक्षं दृष्टम् एव । अतः एतस्य अभियोगः तिरस्करणीयः" इति उक्तवान् । किन्तु न्यायाधीशः एतं वादं न अङ्गीकृतवान् । किमर्थम् ?



## सुवर्णसमयस्य (८) उत्तराणि -

१. राजास्थानस्थः राणाकपूर आदिनाथदेवालयः । २. काश्मीरस्थः अमरनाथः ।

३. ईस्टर् ऐल्याण्ड्प्रदेशस्य अनुसूचितजनजातीयाः ।

प्रयतन्ताम् !

## शरीरे कन्दुकसञ्चारः



विनूतना कन्दुकक्रीडा निरूप्यते अत्र -

अ) टेन्नीस्कन्दुकं दक्षिणहस्तेन गृह्णन्तु ।

आ) हस्तद्वयम् अपि स्कन्धतलं यावत् उन्नयन्तु । 'T' आकारेण तिष्ठन्तु च ।

इ) इदानीं गृहीतं कन्दुकं दक्षिणहस्तस्य उपरि प्रेषयन्तु । तत् कन्दुकं भुजम् उरः च अतिक्रम्य वामभुजस्य उपरि सञ्चरत् वामहस्तं प्राप्नोति । ततः तत् दक्षिणदिशि प्रेरयन्तु । पूर्वोक्तक्रमेण एव तत् दक्षिणहस्तं प्राप्नोति । एवम् एव पर्यायक्रमेण कुर्वन्तु ।



## टेड्डिबेर्पाञ्चालिका

**अपेक्षितानि साधनानि -**

प्राचीनं प्लास्टिक् टेड्डिबेर्, प्लास्टर् आफ् प्यारीस्, कर्तरी, एकः सूत्रखण्डः, केचन वर्णाः च ।

**निर्माणक्रमः -**

१. प्लास्टिक् टेड्डिबेर्पाञ्चालिकां मध्ये विदार्य भागद्वयं प्राप्नुवन्तु ।

२. प्लास्टर् आफ् प्यारिस्द्रव्यं जलेन संयोज्य मर्दयित्वा पङ्कमयतां सम्पादयन्तु ।

३. ततः तेन विदारितायाः टेड्डिबेर्पाञ्चालिकायाः भागद्वयं पूरयन्तु । अनन्तरं भागद्वयम् अपि संयोज्य सूत्रेण दृढतया बध्नन्तु ।

४. यावत् तत् प्लास्टर् आफ् प्यारिस्द्रव्यं शुष्कतां न याति तावत् तयोः भागयोः पृथक्करणं न भवेत् ।

५. शुष्कतानन्तरं प्लास्टिक्पाञ्चालिकां विच्छिद्य क्षिपन्तु । इदानीं प्लास्टर् आफ् प्यारीस् टेड्डिबेर्पाञ्चालिकाकारं प्राप्तवत् दृश्यते खलु ?

६. अन्ते नेत्र-मुख-नासिकादिषु यथायोग्यं वर्णलेपनं कुर्वन्तु ।



# महाभारतम्

पाण्डवानाम् एकवर्षस्य वनवासस्य अनन्तरम् अर्जुनः इन्द्रलोकं गतवान् । सः ततः पञ्चवर्षाणाम् अनन्तरं प्रत्यागतवान् । तस्य आगमनानन्तरं चत्वारि वर्षाणि पाण्डवाः गन्धमादनपर्वतप्रदेशे स्थितवन्तः । कुबेरस्य अनुमतिं स्वीकृत्य यक्षाणां साहाय्येन तस्य प्रदेशस्य सौन्दर्यं दृष्ट्वा सन्तोषम् अनुभूतवन्तः । वनवासस्य दश वर्षाणि समाप्तानि । एकादशं वर्षम् आरब्धम् । द्वादश वर्षाणि यावत् वनवासं कृत्वा वर्षं यावत् अज्ञातवासः करणीयः आसीत् खलु तैः ? अज्ञातवासानन्तरं प्रतीकारः साधनीयः आसीत् अपि । प्रतीकारार्थं पाण्डवाः अवकाशं प्रतीक्षमाणाः आसन् । तस्मिन् समये कदाचित् भीमः धर्मराजं निन्दितवान् । तत् श्रुत्वा अर्जुनः, नकुलः, सहदेवः च मौनं स्थितवन्तः । भीमस्य व्यवहारं न खण्डितवन्तः ते ।

एतं विषयं ज्ञात्वा धर्मराजः – 'दीर्घकालं यावत् वयम् एतस्मिन् सुखमये प्रदेशे वासं कृतवन्तः यत् तस्य परिणामः एषः । अतः अचिरात् एव एतं देवप्रान्तं विहाय प्रतिगन्तव्यम्' इति निश्चितवान् । भीमः यदा घटोत्कचं स्मृतवान् तदा सःअनुक्षणम् एव अनुचरैः सह आगत्य पाण्डवान् वृषपर्वणः आश्रमं नीतवान् । ततः ते बदरिकारण्यम् आगत्य तत्रैव मासं यावत् स्थित्वा किरातदेशस्थं सुबाहुपुरं प्राप्तवन्तः । इन्द्रसेनः, विशोकः इत्यादयः पाण्डवभृत्याः कदाचित् तत्रैव वासं कृतवन्तः आसन् । अनन्तरं घटोत्कचं, तस्य अनुचरान् च प्रतिप्रेष्य पाण्डवाः भृत्यैः सह पादाभ्याम् एव हिमालयस्थं विशाखस्तूपं प्राप्तवन्तः ।

तस्मिन् प्रदेशे मृगयार्थं योग्याः मृगाः



आसन् । मृगयया पाण्डवाः अत्यधिक-तृप्तिम् अनुभवन्ति स्म । अतः ते मृगयां कुर्वन्तः वर्षं यावत् सन्तोषेण तत्रैव स्थितवन्तः ।

एकदा भीमः आयुधानि गृहीत्वा मृगयार्थं गतवान् । सः बहून् मृगान् मारयन् कञ्चित् महासर्पं दृष्टवान् । तस्य वर्णः हरितः, मुखं गुहा इव विशालं च आसीत् । तस्य मुखे चतस्रः घोरदंष्ट्राः आसन् । तस्य नेत्रे अग्निगोलके इव प्रकाशेते स्म । तस्य मुखात् तिर्गतया विषज्वालया वृक्षाः दग्धाः भवन्ति स्म । तादृशं महासर्पं भीमः कदापि न दृष्टवान् आसीत् । सः गर्वेण तं सर्पं मारयितुम् उद्युक्तः । तदा झटिति सर्पः भीमं सुदृढं गृहीतवान् । क्षणं यावत् दिग्भ्रान्तः भीमः तस्मात् विमोचनं प्राप्तुं प्रयत्नं कृतवान् । परन्तु तत् असाध्यं जातम् । एतस्मात् भीमस्य आश्चर्यं जातम् ।

एतावता धर्मराजः भीमस्य अनुपस्थितिं ज्ञातवान् । सः द्रौपद्याः रक्षणार्थम् अर्जुनं, नकुलं, सहदेवं च सूचयित्वा भीमस्य गमनदिशम् अनुसृत्य धौम्यमहर्षिणा सह गतवान् । मार्गे सर्वत्र भीमेन हताः मृगाः राशिरूपेण पतिताः आसन् । अतः मार्गस्य अन्वेषणे धर्मराजस्य किञ्चिदपि कष्टं न जातम् ।

तथा एव अग्रे गतवान् धर्मराजः सर्पेण गृहीतम् असहायकं भीमं दृष्टवान् । भीमस्य एतादृशी परिस्थितिः किमर्थम् आगता इति न ज्ञातवान् धर्मराजः । सः सर्पम् उद्दिश्य उक्तवान् – ''सर्पराज ! भवतः आहारः आवश्यकः चेत् अन्यत् किमपि प्रार्थयतु । अहं ददामि । एषः मम अनुजः अस्ति । एतं त्यजतु कृपया'' इति ।

तदा सर्पः – ''भोः ! बहु कालानन्तरं भगवतः दयया भवतः अनुजः मया प्राप्तः । सः मम आहारः अस्ति । अतः तम् अहं न त्यजामि । हस्तगतम् आहारं को वा परित्यजेत् ? भवान् अपि यदि अत्रैव तिष्ठति तर्हि श्वः भवन्तम् अपि खादेयम्'' इति धर्मराजम् उक्तवान् ।

तस्य उत्तरं श्रुत्वा धर्मराजः – ''भवान् कः ?'' इति पृष्टवान् ।

''अहं भवतः पूर्वजः । मम नाम नहुषः । यावत् जीवितवान् तावत् पुण्यकार्यं कृत्वा अहं बहुकालस्य तपसा इन्द्रपदवीं प्राप्तवान् आसम् । इन्द्रपदवीप्राप्तिकारणतः अहं गर्वेण व्यवहरन् मुनीनाम् अपमाननं



कृतवान् । एतस्य कारणतः अगस्त्यनामकः मुनिः मयि कोपं कृत्वा – 'सर्पः भवतु' इति शापं दत्तवान् । परन्तु तस्य मुनेः अनुग्रहेण एव मया पूर्वजन्मनः स्मरणम्, अत्यधिकपराक्रमः च प्राप्तम् । 'भवतः प्रश्नानां समुचितम् उत्तरं कोऽपि यदा दास्यति तदा एव भवतः शापविमोचनं भविष्यति' इति सः मुनिः माम् उक्तवान् आसीत्'' इति उक्तवान् सर्पः ।

तदा धर्मराजः – ''यथाशक्ति भवतः प्रश्नानाम् उत्तरं दास्यामि अहम् । भवान् प्रश्नान् पृच्छतु'' इति उक्तवान् ।

''ब्राह्मणः नाम कः ? तेन ज्ञातव्यं किम् अस्ति ?'' इति पृष्टवान् सर्पः ।

''यथामति उत्तरम् अहं वदामि । यस्मिन् सत्यं, दानं, सहना, तपः, दया, अनुकम्पः च भवन्ति सः एव ब्राह्मणः । तेन ज्ञातव्यं तु दुःखसुखातीतं परब्रह्मतत्त्वम्'' इति उत्तरं दत्तवान् धर्मराजः ।

तदा सर्पः पुनः पृष्टवान् – ''राजन् ! भवता उक्ताः गुणाः शूद्रे भवन्ति चेत् सः ब्राह्मणः भवितुं न अर्हति वा ? सुखदुःखातीतं परब्रह्मतत्त्वम् अस्ति इति भवता उक्तम् । तत् विहाय अस्मिन् प्रपञ्चे अन्यत् किमपि भवितुं न अर्हति वा ?'' इति ।

''सत्यादिसद्गुणाः शूद्रे सन्ति चेत् सः शूद्रः इति न उच्यते । तादृशगुणाः जाति-ब्राह्मणे न सन्ति चेत् सः अपि ब्राह्मणः इति न उच्यते । तथा न वक्तव्यम् अपि । आचरणम् एव सर्वोत्कृष्टः गुणः अस्ति । शीतोष्णयोः मध्ये अन्या कापि स्थितिः यथा न भवति तथा सुखं दुःखं च विना लोके अन्यत् किमपि नास्ति एव । तादृशद्वन्द्वातीतं श्रेष्ठं परब्रह्मतत्त्वम् एकम् एव इति मम भाति'' इति उत्तरं दत्तवान् धर्मराजः ।

''भवता उक्तं यत् आचरणम् एव अत्युत्तमम् इति । तर्हि आचरणमात्रेण कोऽपि ब्राह्मणः भवति चेत् वर्णाश्रमव्यवस्था व्यर्था एव स्यात् खलु ?'' इति पृष्टवान् सर्पः ।

तदा धर्मराजः – ''जननं, मरणम्, अपत्यप्राप्तिः, वाग्व्यवहारः इत्यादयः सर्वेषां समानाः एव । परन्तु पूर्वम् अनवधानात् जातस्य जातिसाङ्कर्यस्य कारणतः एतादृशाः वर्णाश्रमव्यवस्थादयः कृताः । तावत् एव न, यः वेदान् जानाति

तस्य आचरणम् एव प्रमुखम् । यः कोऽपि ब्राह्मणवंशे सञ्जातः भवति चेदपि वेदसंस्कारप्राप्तिपर्यन्तं सः शूद्रः एव भवति । अनन्तरं क्रमशः सत्यादिगुणान् यदा प्राप्नोति तदा ब्राह्मणः इति उच्यते सः । तादृशगुणान् प्राप्तवान् शूद्रः 'सच्छूद्रः' इति उच्यते इति पूर्वम् एव स्वायम्भुवमनुना उक्तम् अस्ति'' इति उक्तवान् ।

तत् श्रुत्वा सर्पः - ''भवतः उत्तरेण सन्तुष्टः अहम् । भवतः अनुजं त्यजामि'' इति उक्त्वा स्वशापरूपात् मुक्तिं प्राप्य नहुषरूपं प्राप्तवान् । तावता स्वर्गतः विमानम् आगतम् । तत् आरुह्य सः स्वर्गं गतवान् ।



अनन्तरं धर्मराजः भीमेन, धौम्येन च सह पर्णशालाम् आगतवान् । सर्वं वृत्तान्तं तत्रत्यान् उक्तवान् च ।

''भीमेन एवं साहसकार्यं न करणीयम् आसीत्'' इति चिन्तयन्तः तत्रत्याः धर्मराजस्य ज्ञानित्वं स्मरन्तः सन्तोषम् अनुभूतवन्तः ।

पाण्डवाः वर्षाकालसमाप्तिपर्यन्तं द्वैतवने स्थितवन्तः । अनन्तरं ब्राह्मणैः स्वपरिवारैः सह काम्यकवनं गतवन्तः । तत्रत्याः सर्वे मुनयः उत्तमरीत्या पाण्डवानाम् उपचारं कृतवन्तः ।

तावता एव पाण्डवान् द्रष्टुं कृष्णः सत्यभामया सह तेषां समीपम् आगतवान् । एकैकस्य अपि योगक्षेमं विचारितवान् च । अनन्तरं सः धर्मराजम् उद्दिश्य - ''धर्मराज ! भवान् एतावन्ति दिनानि अरण्ये अस्ति चेदपि राजधर्मम् एव पालयन् अस्ति । धर्मराजः इति अन्वर्थं नाम भवतः । यावत् भवतां वनवासकालः, अज्ञातवासकालः च समाप्यते तावता भवता शत्रवः जेतव्याः । एतदर्थं सर्वदा अस्माकं सहकारः भवतः अस्ति एव । भवान् पुनः निश्चयेन राज्यपालनं करिष्यति'' इति उक्त्वा द्रौपदीम् उद्दिश्य - ''पाञ्चालि ! दुर्योधनादीनां कालः समाप्तः । भवत्याः पुत्रान् सुभद्रा सम्यक् पश्यन्ती अस्ति । प्रद्युम्नः तान् धनुर्विद्यां पाठयन् अस्ति । भवती पुत्रणां पालन- विषये कदापि चिन्तां मा करोतु'' इति उक्तवान् ।

धर्मराजः कृष्णं नमस्कृत्य - ''भवान् एव अस्माकं रक्षकः । वनवासः



समाप्तप्रायः । भवतः अनुग्रहेण अज्ञातवासः अपि निर्विघ्नं प्रचलेत् एव । तदनन्तरम् अस्माभिः किं करणीयम् इति भवता एव सूचनीयम्'' इति प्रार्थितवान् ।

यदा कृष्णः पाण्डवैः सह सम्भाषमाणः आसीत् तदा एव तत्र मार्कण्डेयमुनिः आगतवान् । यद्यपि तस्य वयः अधिकं जातम् आसीत्, तथापि सः विंशतिवर्षीयः तरुणः इव अद्भुततेजसा प्रकाशते स्म । मार्कण्डेयमुनिः तत्र स्थितान् सर्वान् अनेकाः कथाः उक्त्वा अनुसरणीयान् धर्ममार्गान् च उपदिष्टवान् ।

यदा आश्रमात् बहिः एतेषां सम्भाषणं प्रचलत् आसीत् तदा आश्रमस्य अन्तः सत्यभामा द्रौपदीम् उद्दिश्य - ''भवत्याः पतयः दिक्पालकानाम् अपेक्षया अपि श्रेष्ठाः । तादृशान् पञ्च पतीन् अपि भवती सर्वदा कथं प्रीत्या पश्यति ? तान् वशीकर्तुं भवतीं किमपि व्रतं कृतवती वा ? मन्त्रतन्त्रेण वा तान् वशीकृतवती वा ? तादृशं रहस्यं भवती माम् अपि यदि वदेत् तर्हि अहम् अपि मम पतिं वशीकर्तुं शक्नुयाम्'' इति पृष्टवती ।

तदा द्रौपदी - ''सत्यभामे ! भवत्या उच्यमानं वशीकरणमार्गं दुष्टस्त्रियः अनुसरन्ति । कृष्णस्य पत्नी भवती एतादृशम् अनुचितं प्रश्नं न पृच्छेत् एव । आत्मनः विषये एव भवती किमर्थं संशयं करोति ? मत्पत्न्या मम विषये मन्त्रतन्त्र-प्रयोगः क्रियते इति यदि पत्या ज्ञायेत तर्हि सः पत्नीं विषसर्पम् इव पश्येत् खलु ? अहं मम पतीन् अपेक्षाः न वदामि । अपेक्षाः कदाचित् न पूर्यन्ते चेदपि कोपं न करोमि । मम पतयः माम् इच्छन्ति इति कारणतः तेषां सेवां कदापि सेवकानां द्वारा न कारयामि अहम् । तैः इष्टम् एव पाकम् अहम् एव कृत्वा मम हस्तेन एव परिवेषयामि । तेषां वचनस्य विरोधं कदापि न करोमि अहम् । कारणं विना न हसामि च । मम सपत्नीभ्यः न असूयामि । यदा धर्मराजः इन्द्रप्रस्थे शासनं करोति स्म तदा प्रतिदिनं सहस्राधिकाः ब्राह्मणाः, ब्रह्मचारिणः, मुनयः च आगच्छन्ति स्म । तेषाम् अतिथीनां सत्कारव्यवस्थाम् अहम् एव पश्यामि स्म । यद्यपि पाण्डवानाम् अन्याः पत्न्यः, अधिकाः दास्यः, अन्ये सेवकाः च आसन्, तथापि अहम् एव सर्वेषां योगक्षेमं पश्यामि स्म । राज्यस्य कोषस्य आयव्ययम्

अपि अहम् एव पश्यामि स्म । एवं कुटुम्बस्य सर्वं भारम् अहम् एव ऊढवती । अतः एव मम विषये मम पतीनां तावान् विश्वासः, अनुरागः च । तेषां वशीकरणार्थं मन्त्रतन्त्रयोः प्रयोगस्य प्रसक्तिः एव नास्ति'' इति उक्तवती ।

द्रौपद्याः वचनानि श्रुत्वा सत्यभामा - ''भवतीम् एतादृशं प्रश्नं पृष्टवत्याः मम पश्चात्तापः भवति । एतत् सर्वम् अहं कुतूहलार्थं पृष्टवती । भवती मयि कुपिता मा भवतु'' इति उक्तवती ।

अनन्तरं मार्कण्डेयमुनिः, कृष्णः, सत्यभामा च पाण्डवानाम् अनुज्ञां प्राप्य स्वस्थानं प्रतिप्रस्थितवन्तः । ततः पाण्डवाः अपि काम्यकवनं विहाय पुनः द्वैतवनम् आगतवन्तः । तत्र कस्मिंश्चित् सुन्दरप्रदेशे सरोवरस्य पार्श्वे पर्णशालां निर्माय तत्रैव वासं कृतवन्तः च ।

यदा पाण्डवाः द्वैतवने आसन् तदा कश्चित् ब्राह्मणः हस्तिनापुरं गतवान् । तत्र धृतराष्ट्रं दृष्ट्वा - ''भोः राजन् ! अहं द्वैतवनात् आगतवान् । तत्र पाण्डवाः सर्वाणि कष्टानि अनुभवन्तः वासं कुर्वन्तः सन्ति । त्रिलोकीम् एव जेतुं शक्ताः पञ्च पतयः सन्ति चेदपि द्रौपदी अनाथा इव कष्टेन जीवनं कुर्वती अस्ति'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा धृतराष्ट्रः दुःखितः । यतः 'पाण्डवानां कष्टानि मम उपेक्षाकारणतः एव आगतानि' इति भावयति स्म सः । सः तं ब्राह्मणम् उद्दिश्य - ''मम पुत्राणाम् अपेक्षया धर्मराजः उत्तमः । सः कदापि कुपितः न भवति । अर्जुनः धर्मराजस्य विधेयः । भीमः तथा न । सः पराक्रमी, सर्वदा कुपितः भवति । परन्तु धर्मराजस्य वचनानुगुणम् एव सः व्यवहरति । एतस्याः परिस्थितेः कारणं तु मम पुत्रः दुर्योधनः एव । तस्य दुष्टबुद्धिकारणतः एव पाण्डवाः कष्टम् अनुभवन्तः सन्ति । यदि पाण्डवेभ्यः दुर्योधनेन अर्धराज्यं दीयते तर्हि तेषां कष्टम् एव नास्ति । परन्तु सः न ददाति । तस्य स्वभावः एव तथा । न जाने, अग्रे कीदृशः विनाशः भवेत् इति'' इति वदन् दीर्घं निःश्वसितवान् ।

- (अनुवर्तते)



# समयस्फूर्तिः

रामनगरे कश्चित् भूस्वामी आसीत् । तत्सम्बद्धेषु केषुचित् ग्रामेषु अनावृष्टिकारणतः कृषिकाः करं दातुम् अशक्ताः । तस्य भूस्वामिनः कार्यालये उद्योगित्वेन स्थितः माधवः उदारः आसीत् । सः कृषिकाणां कष्टं ज्ञात्वा तेभ्यः करं न स्वीकृतवान् आसीत् । अतः भूस्वामिना प्राप्तव्यं धनं न दत्तवान् माधवः । एतत् कारणं माधवः मन्त्रिणः द्वारा भूस्वामिनं सूचितवान् चेदपि भूस्वामी तम् उद्योगात् उच्चाटितवान् । तस्य स्थाने शेषगिरिनामकं कश्चित् नियोजितवान् च ।

सः शेषगिरिः शीघ्रकोपी आसीत् । सः दयालुः अपि न आसीत् । सः एकस्मिन् ग्रामे स्वकार्यलयम् उद्घाट्य उद्घोषणं कारितवान् यत् अग्रिमचतुर्विंशति-घण्टाभ्यन्तरे एव सर्वैः अवशिष्टः करः दातव्यः । अन्यथा कृषिकाणां पृष्ठे शिलाः आरोप्यन्ते इति । तस्मिन् ग्रामे प्रकाशः नाम कश्चित् युवकः आसीत् । तस्य बुद्धिशक्तिः समयस्फूर्तिः च अधिका आसीत् । शेषगिरिणा कारितम् उद्घोषणं श्रुत्वा सः तस्य समीपं गतवान् । तं नमस्कृत्य - ''स्वामिन् ! अस्मिन् प्रदेशे न केवलम् अनावृष्टिः, अपि च लुण्ठाकाः अपि सन्ति'' इति उक्तवान् ।

लुण्ठाकानां नामश्रवणेन एव भीतः शेषगिरिः - ''अहं तु अत्र करसङ्ग्रहणनिमित्तम् आगतवान् । तथापि पृच्छामि यत् लुण्ठाकेभ्यः रक्षणार्थं भवन्तः किं कुर्वन्ति ?'' इति पृष्टवान् ।

तदा प्रकाशः - ''वयम् उत्तमजातीयान् शुनकान् पालितवन्तः'' इति उक्तवान् ।

''ते कुतः प्राप्तुं शक्यन्ते ?'' इति पुनः पृष्टवान् शेषगिरिः ।

''मम समीपे एव सन्ति शुनकाः । यदि अपरिचितान् ते पश्यन्ति तर्हि ते हूं हूम् इति आक्रोशनं कुर्वन्ति'' इति उक्तवान् प्रकाशः ।

तत् श्रुत्वा शेषगिरिः परिहासेन - ''शुनकाः हूं हूम् इति न अक्रोशन्ति । ते 'भौ, भौ' इति भषन्ति'' इति वदन् उच्चैः भषणम् आरब्धवान् । एतत् श्रुत्वा कर्मकराः सर्वे भूस्वामिनम् एतं विषयं सूचितवन्तः । भूस्वामी आप्तमन्त्रिणम् आहूय- ''शेषगिरेः भूतस्पर्शः जातः स्यात् । भवान् अनुक्षणम् एव गत्वा विषयं सर्वं ज्ञात्वा अग्रिमव्यवस्थां करोतु'' इति उक्तवान् ।

मन्त्री ग्रामं गत्वा कृषिकाणां कष्टं ज्ञातवान् । सः पुनः माधवम् उद्योगे नियोजितवान् । तस्य सहायकत्वेन प्रकाशम् अपि नियोजितवान् सः ।



# कदलीवृक्षः

आम्रं, पनसं, कदलीफलं च प्रमुखफलत्रयत्वेन परिगण्यन्ते । एवम् एव कदली-आम्र-उदुम्बर-तिन्त्रिणीवृक्षाः प्रमुखाः वृक्षाः इति उच्यन्ते । एतान् अधिकृत्य काचित् विचित्रा कथा केषुचित् प्रदेशेषु श्रूयते । एते पञ्च वृक्षाः अपि कस्मिंश्चित् काले मनुष्यरूपेण सहोदर्यः आसन् । बहुकालं यावत् तासां विवाहः न जातः । कदाचित् देवः प्रत्यक्षीभूय 'विवाहम् इच्छन्ति वा ?' इति ताः पृष्टवान् । तदा चतस्रः सहोदर्यः विवाहम् अङ्गीकृतवत्यः । किन्तु अन्तिमा सहोदरी न अङ्गीकृतवती । सा सन्तानमात्रं प्रार्थितवती । अनन्तरं देवः ताः सर्वाः वृक्षरूपेण परिवर्त्य - 'यः एतान् वृक्षान् आरोहति सः एव पतिः' इति उक्तवान् । अतः एव विवाहम् अङ्गीकृतवतः वृक्षान् सर्वे आरोढुं शक्नुवन्ति चेदपि कदलीवृक्षं कोऽपि आरोढुं न शक्नोति ।

कदली इति संस्कृतभाषया, हिन्दिभाषया केला इति, आंग्लभाषया बनाना प्लाण्टन्, आडम्स् आपिल इत्यपि उच्यते । काभिश्चित् भारतीयभाषाभिः कदली इत्येव उच्यते । तमिळु-मलयाळभाषया च वाळै इति, तेलुगुभाषया अरटि इति च उच्यते ।

बौद्धाः कदलीवृक्षं पवित्रं मन्यन्ते । बौद्धसाहित्ये उक्तं 'मोचापानं' कदलीफलेन एव सज्जीक्रियते । अस्माकं पुराणे श्रूयते यत् - हनुमान् हिमालयप्रान्ते कदलीवने आसीत् इति ।

कदलीवृक्षस्य पुष्पं, शलाटुः, फलं च आहाररूपेण उपयुज्यते । कदलीवृक्षस्य शलाटुः हरितवर्णीयः भवति । तस्य फलं हरितं, पीतं, पीतहरितमिश्रितं, रक्तवर्णीयं वा भवति । तद् आकारेण लघु बृहत् चापि भवति । कदल्यां ५,००० प्रभेदाः सन्ति इति श्रूयते । पच्चेकदली, बूदिकदली, वृक्षकदली, रसकदली, एलाकदली, अरण्यकदली इति अष्ट, दश वा विधाः प्रसिद्धाः सन्ति ।

कदलीपर्णं बृहदाकारकं पञ्चषपादमितदीर्घम्, अधिकविशालं च भवति । दक्षिणभारते केषुचित् स्थलेषु भोजनार्थम् एतस्य उपयोगः क्रियते ।

जनाः विवाहादिशुभकार्येषु वितानं मण्डपं द्वारं च पुष्पगुच्छसहितेन कदलीवृक्षेण अलङ्कुर्वन्ति । एतं शुभसङ्केतं मन्यन्ते जनाः ।

यदा शलाटुः पक्वं भवति तदा वृक्षं कर्तयन्ति । कर्तितवृक्षस्य प्रकाण्डं परितः स्थितेभ्यः कन्देभ्यः नूतनसस्यानि उत्पद्यन्ते । एवं कदलीसन्तानः वर्धते ।



अस्मद्देशीयाः ऋषयः -

# भरद्वाजः

सुदीर्घकालं जीवन् अपि मानवः इतोऽपि अधिककालं जीवितुम् इच्छति । एषः मानवस्य स्वभावः । परन्तु तदेव जीवनम् उन्नत-ध्येयसाधननिमित्तं यदि भवति तर्हि तत् नितरां प्रशस्यते । सप्तर्षिषु अन्यतमस्य भरद्वाजस्य कथा अत्र उत्तमम् उदाहरणम् अस्ति ।

भरद्वाजः अत्रिमुनेः पुत्रः, आदिकाव्यस्य रामायणस्य कर्तुः वाल्मीकिमुनेः शिष्यः च । सः वाल्मीकिमुनितः वेदान् अधीतवान् । तथापि तस्य ज्ञानपिपासा न शान्ता ।

इन्द्रादिदेवतानाम् आशीर्वादेन भरद्वाजः दीर्घकालं जीवितवान् आसीत् । आजीवनं सः वेदाध्ययने, देवध्याने च निरतः आसीत् । यदा मरणकालः सन्निहितः तदा पुनः इन्द्रस्य ध्यानं कृत्वा - 'मम आयुः वर्धयतु' इति प्रार्थितवान् भरद्वाजः ।

प्रत्यक्षीभूतः इन्द्रः भरद्वाजम् आत्मना सह किञ्चिद्दूरं नीतवान् । दूरे उन्नताः त्रयः पर्वताः दृश्यन्ते स्म । इन्द्रः भरद्वाजस्य अञ्जल्यां मुष्टित्रयपरिमिताः सिकताः स्थापितवान् । भरद्वाजः मौनं स्थितवान् आसीत् ।

''दूरे स्थितानां पर्वतानां महत्त्वं मनसि निधाय भवान् वदतु - अञ्जल्यां स्थितानां सिकतानां परिमाणं कियत् ?'' इति पृष्टवान् इन्द्रः ।

''क्व ते पर्वताः, क्व च अञ्जलिमिताः सिकताः ! महत् अन्तरम् एतयोः'' इति उक्तवान् भरद्वाजः ।

तदा इन्द्रः - ''भवता ज्ञातं वेदज्ञानम् अपि मुष्टिपरिमितम् एव । भवता पर्वतपरिमितं ज्ञातव्यम् अस्ति'' इति उक्तवान् इन्द्रः ।

'भरद्वाजः मद्वचनात् भीतः सन् - यावत् ज्ञातं तावता अलम् इति वदेत्, अथवा अहङ्कारेण - मया सर्वं ज्ञातम् अस्ति इति वा वदेत्' इति इन्द्रः चिन्तितवान् आसीत् । भरद्वाजः तु किञ्चित्कालं यावत् मौनं स्थित्वा - ''तर्हि ज्ञानं नाम तावत् बृहत् वा ! तत् मया सम्पादनीयम् । भवतः आशीर्वादः अस्ति चेत् तान् त्रीन् अपि पर्वतान् मदीयान् करिष्यामि'' इति महता विनयेन उक्तवान् ।

भरद्वाजस्य दृढम् आत्मविश्वासम्, उन्नतध्येयं च ज्ञात्वा इन्द्रः आश्चर्यचकितः अभवत् । सः भरद्वाजं पुनः अपि शतवर्षपरिमितेन आयुषा अनुगृह्य अदृश्यतां गतः ।



# भवन्तः जानन्ति वा ?

१. ताजमहल् यस्मिन् नगरे अस्ति तस्य नगरस्य नाम आगरा इति आग्रबनामूलतः आगतम् अस्ति । तस्य पदस्य अर्थः कः ?

२. १९७२तमे वर्षे व्याघ्रः अस्माकं राष्ट्रियमृगः इति उद्घोषितम् । तस्मात् उद्घोषणात् पूर्वम् अस्माकं राष्ट्रियमृगः कः आसीत् ?

३. बङ्गलादेशस्य राष्ट्रपिता इत्येव प्रसिद्धस्य मुजिबूर् रहमानस्य पुत्री षेक्हसीना इदानीं प्रधानमन्त्रिणी अस्ति । इण्डोनेषियादेशे प्रधानमन्त्रिण्या सुहार्तया सह सुकर्नोवर्यस्य पुत्री अधिकारार्थं स्पर्धमाना अस्ति । तस्याः नाम किम् ?

४. प्रधानमन्त्रिणः देवेगौडवर्यस्य राज्यं कर्णाटकम् इति सर्वे जानन्ति एव । तस्य जन्मस्थलं कस्मिन् जनपदे (जिल्ला) अस्ति ?

५. हिरोशिमानागासाकिनगरयोः उपरि अण्वस्त्रस्य पातनस्य अनन्तरं द्वितीयं जागतिकयुद्धं समाप्तिम् अगच्छत् । वस्तुतः नागासाकिनगरस्य उपरि अण्वस्त्रपातनयोजना तु न आसीत् । एवं तर्हि तत् कुत्र पातनीयम् इति चिन्तितम् आसीत् ?

६. सामान्यतः पाकशालायां दृश्यमानः कश्चन कीटः बाम्ब्स्फोटम् अपि सोढुं शक्नोति । सः कीटः कः ?

७. आफ्रिकादेशे आवेन्जलपातः कुत्र अस्ति ?

८. आधुनिक-ओलम्बिक्क्रीडा यद्यपि १८९६ तमे वर्षे आरब्धा, तथापि तस्याः सङ्कल्प-स्वीकारपद्धतिः अनन्तरम् आरब्धा । सा कदा आरब्धा ?

९. १९६०तमे वर्षे अस्माकं देशे प्रथमतया एस्.टि.डि. व्यवस्था आरब्धा । सा व्यवस्था कयोः नगरयोः मध्ये आरब्धा ?

१०. बालानां प्रियं किं वस्तु इटालोमार्सियोनिवर्यः अन्विष्टवान् ?

११. १८१५ तमे वर्षे अमेरिकादेशे आरब्धा का क्रीडा अनन्तरम् एषियादेशेषु प्रसिद्धिं गता ?

१२. 'कामन्वेल्त् क्रीडानां पुरातनं नाम किम् ?

१३. प्रथमस्पर्धायाम् एव शतधावनानि सम्पादितवान् प्रथमः भारतीयः क्रिकेट्क्रीडापटुः कः ?

१४. पद्मश्रीः, पद्मभूषणं, पद्मविभूषणं, भारतरत्नम् इति एतान् चत्वारि पारितोषिकाणि प्राप्तवान् भारतीयः कः ?

१५. 'योजनायोगः' प्रथमं कदा आरब्धः ? तस्य प्रथमः उपाध्यक्षः कः ?

## उत्तराणि

१. स्वर्गोद्यानम् इति ।

२. सिंहः ।

३. मेघावती ।

४. हासनजनपदे ।

५. हिरोषिमासमीपे स्थिते कोकूरा नगरे ।

६. तैलपः ।

७. उगाण्डा ।

८. १९२०तमे वर्षे आण्डर्स् ओलम्पिक्स्तः ।

९. लक्नो-कान्पुरयोः ।

१०. ऐस्क्रीम् कोन् ।

११. वालीबाल् ।

१२. ब्रिटीष् एम्पैर् गेम्स् ।

१३. लाला अमरनाथः ।

१४. सत्यजित् राय् ।

१५. १९५०तमे वर्षे । प्रोफेसर् महालनोटिस् ।

# र स वा र्ताः

## आकाशतः लालिपाप्स्

थायवान्फार्मोसाराजधान्यां कायुपियुनगरे कदाचित् हेलिकाप्टर्यानस्य शब्दः श्रुतः । तदा बालाः सर्वे धावन्तः गृहतः बहिः आगताः । आकाशं दृष्टवन्तः च । तदा लालिपाप्-आकारेण स्थितं रक्तवर्णीयं हेलिकाप्टर्यानं तैः दृष्टम् । यदा तत् समीपम् आगतं



तदा तैः ज्ञातं यत् तस्य चालनार्थं कोऽपि नास्ति इति । रिमोट्कण्ट्रोल्द्वारा योजितानां रेडियोतरङ्गाणां द्वारा तत् डयते स्म । तत् किञ्चित्कालं यावत् आकाशे भ्रमणं कृत्वा गमनसमये लालिपाप्स् पातयित्वा गतम् । एतस्मात् बालानां महत् आश्चर्यं जातम् ।

## बृहत् वस्त्रफलकम्

इदानीन्तनः महान् रोगः नाम 'एय्ड्स्' । एतस्य निवारणार्थम् औषधम् एव नास्ति । एषः रोगः यथा न आगच्छेत् तथा जागरूकतायाः आश्रयणम् एव एतस्य चिकित्सा । सामान्यैः जनैः अपि एषः विषयः ज्ञातव्यः अस्ति । एतं विषयं ज्ञापयितुं सर्वैः देशैः सभाः आयोज्यन्ते । एतेन सहैव आकाशवाणी, दूरदर्शनम्, पत्रिकाः इत्यादिभिः प्रचारमाध्यमैः 'एय्ड्स्'रोगस्य आगमनं यथा न भवेत् तथा कथं जागरूकता वहनीया इति प्रचारः क्रियमाणः अस्ति अपि । दिने दिने 'एय्ड्स्'रोगिणां संख्या अपि वर्धमाना अस्ति इति तु विषादास्पदविषयः । एतं रोगं निरोद्धुं डिसेम्बर् १ दिनाङ्के प्रपञ्चे सर्वत्र 'एय्ड्स्'दिनम् आचरितम् । मुम्बयिनगरे एतस्य प्रथमदिने महती शोभयात्रा प्राचलत् । तस्यां शोभयात्रायां १०,००० जनाः भागम् ऊढवन्तः आसन् । तस्यां शोभयात्रायाम् 'एय्ड्स्'रोगनिरोध-सम्बद्धैः घोषवाक्यैः युक्तम् एकम् अतिदीर्घं वस्त्रफलकं गृहीत्वा जनाः गतवन्तः आसन् । तस्य वस्त्रफलकस्य दैर्घ्यं ४.५ कि.मी. आसीत् । प्रपञ्चे एव एतत् बृहत् वस्त्रफलकं स्यात् इति जनानाम् ऊहा । एतस्य वस्त्रफलकस्य दर्शनात् सहस्रशः जनाः 'एय्ड्स्'सम्बद्धं विचारं ज्ञातवन्तः इत्यत्र नास्ति संशयः ।

## धनदाता सान्ताक्लूज् !

बर्लिन्विश्वविद्यालयस्य कस्मिंश्चित् प्रकोष्ठे विशेषकक्ष्या काचित् आयोजिता आसीत् । तस्यां कक्ष्यायाम् उपस्थिताः सर्वे छात्राः अपि तस्मिन् विद्यालये एव पठन्तः आसन् । परन्तु ते सर्वे सान्ताक्लूज् इव रक्तवर्णीयं युतकं, श्वेतवर्णीयं श्मश्रु, वृद्धवेषं च धृत्वा आगताः आसन् । यतः सान्ताक्लूज् इव कथम् अभिनयः करणीयः इति ज्ञातुं ते तथा



आगताः आसन् । क्रिस्मस्समये सान्ताक्लूज् इव अभिनयः क्रियते चेत् युरोप्देशस्थाभिः काभिश्चिन् संस्थाभिः पुरस्कारः दीयते । एवम् उत्साहं प्राप्तवन्तः तरुणाः क्रिस्मस्समये किञ्चिद्धनं सम्पादयन्ति ।



# पितुः अपेक्षा

पूर्वं राजीवः नाम कश्चित् वणिक् आसीत् । तस्य त्रयः पुत्राः आसन् । एका पुत्री च आसीत् । पुत्र्याः सत्यवत्याः तृतीये वयसि तस्याः माता दिवं गता । तस्मिन् समये राजीवः वाणिज्यार्थं द्वीपान्तरं गतवान् आसीत् ।

केषाञ्चित् दिनानाम् अनन्तरं राजीवः गृहं प्रत्यागत्य विषयं ज्ञात्वा नितरां दुःखितः । अनन्तरं सः गृहे कर्मकराः सन्ति चेदपि स्वयम् एव पुत्रान् पोषयन् वाणिज्यं विस्मृतवान् एव । तस्य वज्रवाणिज्यं स्थगितम् इति कारणतः तदीया सम्पत्तिः अपि न्यूना जाता ।

एतत् ज्ञात्वा राजीवः 'अचिरात् एव वाणिज्यार्थं द्वीपान्तरं गन्तव्यम्' इति यावत् चिन्तयन् आसीत् तावता गोदावरी-पुष्करोत्सवः आगतः । सः स्वपुत्रीं सत्यवतीम् अपि आत्मना सह पुष्करस्नानार्थं नीतवान् ।

ततः ग्रामम् आगतः राजीवः गृहं प्रविशन् – ''सत्यवति ! सत्यवति !'' इति उच्चैः रोदनं कुर्वन् तत्रैव अधः भूमौ पतितवान् ।

''तात ! किम् अभवत् ? सत्यवती कुत्र ?'' इति सर्वे पुत्राः तस्य समीपम् आगत्य पृष्टवन्तः ।

''भवताम् अनुजा जनानां मध्ये नष्टा अभवत् । इतःपरं भवताम् अनुजा न मिलेत्'' इति उक्तवान् राजीवः ।

इतः केषाञ्चित् दिनानम् अनन्तरं राजीवः स्वपुत्रणां पोषणदायित्वं सर्वं कर्मकरेषु आरोप्य वाणिज्यनिमित्तं द्वीपान्तरं प्रति प्रस्थितवान् ।

एवमेव दश वर्षाणि अतीतानि । एतेषु वर्षेषु राजीवः एकवारम् अपि गृहं न आगतवान् आसीत् । अथ कदाचित् सः

'सुभद्रा'



पुत्रान् द्रष्टुं गृहम् आगतवान् । सः स्वपुत्रान् आहूय - ''पुत्राः ! एतस्य वज्रवाणिज्यस्य निमित्तं मया समुद्रप्रयाणेन एव दीर्घकालः यापितः । मम प्राणाः अपि समुद्र-प्रयाणसमये एव गच्छेयुः कदाचित् । तथा भविष्यति चेत् अट्टे उत्तरदिशि स्थिते प्रकोष्ठे या पेटिका अस्ति सा मम मरणानन्तरं भवद्भिः उद्घाटनीया । अन्यच्च भवताम् अनुजायाः सत्यवत्याः निमित्तं महान्तम् अपि त्यागं कर्तुं भवन्तः सिद्धाः भवेयुः'' इति वदन् प्रकोष्ठस्य कुञ्चिकां तेभ्यः दत्तवान् ।

अनन्तरं राजीवः पुनः वाणिज्यार्थं गृहतः प्रस्थितवान् । केषाञ्चित् दिनानाम् अनन्तरं तेन आरूढा नौका झञ्झावातकारणतः समुद्रे मज्जिता अभवत् । सर्वे प्रयाणिकाः अपि जले निमज्जिताः अभवन् । द्वौ नाविकौ कथञ्चित् रक्षितौ । तौ राजीवस्य गृहम् आगत्य मरणवार्तां तस्य पुत्रान् सूचितवन्तौ ।

एतां वार्तां श्रुत्वा राजीवस्य पुत्राः अत्यन्तं दुःखिताः । तदा ज्येष्ठः अनुजौ उक्तवान् - ''एवं भवेत् इति कारणतः एव पिता अस्मभ्यं प्रकोष्ठस्य कुञ्चिकां दत्त्वा गतवान् । इदानीं वयं गत्वा पेटिकायां किम् अस्ति इति दृष्ट्वा तस्य अन्तिमाम् अपेक्षां पूरयिष्यामः'' इति ।

अनन्तरं त्रयः अपि गत्वा प्रकोष्ठस्य द्वारम् उद्घाटितवन्तः । पेटिकायाः आवरणम् अपि अपनीय दृष्टवन्तः । परन्तु तत्र एकस्मात् कागदात् ऋते अन्यत् किमपि न आसीत् । तेषां चिन्तनम् आसीत् यत् - पेटिकायां धनं, वज्रं, सुवर्णं वा भवेत् इति । तस्मिन् कागदे राजीवेन लिखितम् आसीत् - ''गुरुपुरे श्रीपतिः नाम मम बाल्यमित्रम् अस्ति । तस्य पुत्र्याः विवाहः भवतां धनेन कारणीयः । एषा एव भवतां पितुः अपेक्षा'' इति । तत् पठित्वा सर्वे पुत्राः आश्चर्यचकिताः ।

तस्यां रात्रौ त्रयः अपि निद्रां न कृतवन्तः । ज्येष्ठः पुत्रः तु कोपेन - 'एषः किदृशः पिता ? अस्मभ्यं किञ्चिदपि सम्पत्तिम् अदत्त्वा दिवं गतः । अन्यस्य कस्यचित् गृहस्य कन्यायाः विवाहः, अनुजयोः जीवनमार्गस्य कल्पनं वा मया किमर्थं करणीयम् ? न अहम् अविवेकी' इति चिन्तयन् रात्रौ एव गृहं त्यक्त्वा कुत्रचित् गतवान् ।



अग्रजः गृहं त्यक्त्वा गतवान् इति विषयं प्रातःकाले ज्ञात्वा तृतीयः पुत्रः द्वितीयपुत्रम् उक्तवान् - "आवां वा पितुः अपेक्षां पूरयाव । एतत् गृहं विक्रीय लब्धेन धनेन श्रीपतेः पुत्र्याः विवाहं कारयाव । अनन्तरं कुत्रचित् उद्योगं कुर्वन्तौ जीवाव" इति ।

तदा द्वितीयपुत्रः - 'अस्तु' इति अङ्गीकृतवान् ।

अनन्तरं सप्ताहाभ्यन्तरे एव गृहं विक्रीय धनं स्वीकृत्य उभौ अपि गुरुपुरं प्रति प्रस्थितवन्तौ । अन्धकारात् पूर्वम् उभौ कञ्चित् लघुग्रामं प्राप्तवन्तौ । तस्य ग्रामप्रमुखस्य गृहस्य पुरतः कोलाहलः श्रूयते स्म । तत्र एतौ सहोदरौ गतवन्तौ ।

तत्र द्वौ युवकौ, काचित् वृद्धा च स्थिताः आसन् । 'विषयः कः ?' इति तत्रत्यं कञ्चित् पृष्टवन्तौ एतौ ।

तदा कश्चन उक्तवान् - "तस्याः वृद्धायाः द्वौ पुत्रौ स्तः, एका पुत्री च अस्ति । पितुः जीवितकाले सर्वे सन्तोषेण आसन् । तस्य मरणस्य अनुक्षणम् एव पुत्रौ द्वौ अपि पितुः सम्पत्तिं स्वीकृत्य मात्रे, अनुजायै च किमपि न दत्तवन्तौ । 'पित्रे दत्तस्य वचनस्य अनुगुणम् अनुजायाः विवाहः कारणीयः एव' इति माता वदति । परन्तु पुत्रौ वदतः यत् सर्वसम्पत्तेः उपयोगः अनुजायाः निमित्तं यदि भवेत् तर्हि अग्रे आवयोः पुत्राणां स्थितिः का भवेत् इति । एतां समस्यां परिहर्तुम् एव ग्रामप्रमुखस्य पुरतः वयं मिलिताः" इति ।

अनन्तरम् उभौ अपि ततः प्रस्थाय कस्याञ्चित् वृद्धायाः गृहं गत्वा भोजनं कृतवन्तौ । तत्रैव निद्रितवन्तौ च । द्वितीयपुत्रेण चिन्ताकारणतः निद्रा एव न प्राप्ता । अन्ते सः - 'तस्याः वृद्धायाः पुत्राः स्वानुजायाः एव विवाहं कारयितुं न इष्टवन्तः । एवं स्थिते अपरिचितस्य गुरुपुरवासिनः श्रीपतेः पुत्र्याः विवाहार्थं किमर्थम् आवाभ्यां धनव्ययः करणीयः ? तेन एव धनेन वाणिज्यं वा कृत्वा सुखेन जीवितुं शक्यते' इति निर्णीतवान् । रात्रौ एव धनं स्वीकृत्य ततः कुत्रचित् गतवान् च ।

प्रातःकाले तृतीयः उत्थाय अग्रजं, धनं च अदृष्ट्वा प्रवृत्तं सर्वम् अवगतवान् । अनन्तरं सः भगवतः प्रार्थनां कृत्वा अग्रे गुरुपुरं प्रति प्रस्थितवान् ।

दिनद्वयानन्तरं तृतीयः गुरुपुरं प्राप्तवान् ।

तत्र कांश्चन विचार्य श्रीपतेः गृहं प्राप्तवान् । श्रीपतेः अट्टचतुष्टयात्मकं गृहं दृष्ट्वा सः अत्यन्तं चकितः सन् – 'एतादृशस्य धनिकस्य पुत्र्याः विवाहः अस्माभिः किमर्थं निर्वर्तनीयः ?' इति चिन्तितवान् ।

अनन्तरं सः गृहस्य मुखद्वारसमीपं गत्वा – "श्रीपतिवर्य, श्रीपतिवर्य !" इति यावत् आहूतवान् तावता मध्यवयस्कः आजानुबाहुः कश्चित् आगत्य द्वारम् उद्घाट्य – "अहम् एव श्रीपतिः । भवान् किमर्थम् अत्र आगतवान् अस्ति ?" इति पृष्टवान् ।

"अहं राजीवस्य तृतीयः पुत्रः । मम पितुः अन्तिमा अपेक्षा आसीत् यत् स्वव्ययेन अस्माभिः भवतः पुत्र्याः विवाहः निर्वर्तनीयः इति । परन्तु मया आनीतं धनं मार्गे नष्टम् । कृपया भवान् यदि किञ्चित् समयं दद्यात् तर्हि अहं कथञ्चित् पुनः धनसञ्चयं कृत्वा भवतः पुत्र्याः विवाहं निर्वर्तयिष्यामि । मम पितुः अन्तिमाम् अपेक्षाम् अपि पूरयिष्यामि च" इति उक्तवान् तृतीयः पुत्रः ।

तस्य वचनं श्रुत्वा श्रीपतिः प्रीत्या तम् अन्तः नीत्वा उपवेशितवान् । अनन्तरं तम् उद्दिश्य – "अहं भवतः पिता च बाल्यतः स्नेहितौ । भवतः पितुः मरणवार्तां श्रुत्वा अहम् अपि दुःखितः अस्मि । सः भवतां भविष्यस्य निमित्तम् अत्यन्तं परिश्रमं कृतवान् । स्वस्य अनुपस्थितौ पुत्र्याः पोषणम् उत्तमरीत्या न भवेत् इति कारणात् पुष्करे पुत्री नष्टा इति भवतः सर्वान् उक्त्वा सः सत्यवतीं मम गृहे स्थापितवान् । तथा च वाणिज्ये सम्पादितं लक्षात्मकं धनं मम समीपे स्थापयित्वा – 'मम मरणानन्तरं मम त्रिषु पुत्रेषु यः भवतः गृहम् आगमिष्यति सः मम परीक्षायां जयं प्राप्तवान् इति भवान् चिन्तयेत् । तस्मै मम सर्वसम्पत्तिं दत्त्वा सत्यवत्याः विचारं सूचयेत्' इति माम् उक्तवान् आसीत् । भवान् तादृशं जयं प्राप्य अत्र आगतवान् अस्ति । प्रथमं भवन्तं प्रतीक्षमाणां भवतः अनुजां पश्यतु" इति उक्त्वा सत्यवतीम् आहूतवान् ।

श्रीपतेः वचनं श्रुत्वा आश्चर्यचकितः तृतीयः पुत्रः सर्वालङ्कारभूषिताम् अनुजां दृष्ट्वा इतोऽपि सन्तुष्टः । एतस्मात् तस्य नेत्राभ्याम् आनन्दाश्रूणि आगतानि ।





# अपूर्ववस्तु

भवानीनगरे जयशीलः नाम कश्चित् महान् धनिकः आसीत् । तस्य जयपालः, विजयः, अजयः चेति त्रयः पुत्राः आसन् । वयसि, विद्यायां, स्वभावे वा तेषु अधिकः भेदः न आसीत् ।

ते त्रयः सहोदराः अपि अत्यन्तं बुद्धिशालिनः, परस्परं प्रीतिमन्तः च आसन्। तेषां मध्ये रहस्यम् एव न आसीत्। परन्तु एकं विषयं ते त्रयः अपि गोपितवन्तः आसन् । तेषां त्रयाणाम् अपि भवानीनगरस्य राजकुमार्यां निरुपमादेव्याम् अनुरागः आसीत् । कथञ्चित् सा एव परिणेतव्या इति त्रयाणाम् अपि सङ्कल्पः आसीत् ।

ते त्रयः सहोदराः प्रतिदिनं सायङ्काले प्रासादस्य पार्श्वे स्थितम् उद्यानं विहारार्थं गच्छन्ति स्म । तस्मिन् समये एव राजकुमारी निरुपमादेवी प्रासादस्य अट्टे इतस्ततः अटन्ती भवति स्म । कदाचित् सा वीणां वादयन्ती मधुरस्वरेण गायन्ती अपि भवति स्म । एतत्सर्वम् आसक्त्या पश्यन्तः अपि ते त्रयः राजकुमार्याः विषयं परस्परं तु न वदन्ति स्म ।

एवम् एव कालः अतीतः । एकदा जयशीलः स्वपुत्रान् आहूय उक्तवान् - ''पुत्राः ! अहं वृद्धः जातः । मया सम्पादितया सम्पत्त्या एव भवद्भिः सुखेन जीवितुं शक्यते । परन्तु आत्मना सम्पादितेन धनेन यत् जीवनं क्रियते तत् पुरुषलक्षणं इति उच्यते । तादृशम् उत्तमं जीवनं भवद्भिः करणीयम् । इदानीं भवन्तः विवाहवयस्काः जाताः । विवाहानन्तरं कुटुम्बं वर्धिष्यते । तत्कारणतः गच्छता कालेन सम्पत्तिः न्यूना भवेत् । अतः भवन्तः देशपर्यटनं कृत्वा धनसङ्ग्रहणं कृत्वा आगच्छन्तु । अनन्तरम् एव भवन्तः विवाहिताः भवन्तु, सुखेन

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''



जीवनं कुर्वन्तु च'' इति ।

पितुः वचनं पालयितुं ते त्रयः सहोदराः अपि एकस्मिन् शुभमुहूर्ते पितुः सकारात् किञ्चित् धनं स्वीकृत्य गृहतः उत्तरदिशि प्रयाणम् आरब्धवन्तः । दिनं यावत् प्रयाणं कृत्वा महावटनामकम् रथोत्सवस्थानं प्राप्तवन्तः च ।

तस्मिन् रथोत्सवे ते सहोदराः आत्मना दृष्टं वस्तु क्रीतवन्तः । तस्मिन् दिने शिवरात्रिः आसीत् । अनन्तरदिने प्रातः - ''अग्रिमवर्षे शिवरात्रिदिने अत्रैव परस्परं मेलिष्यामः'' इति निर्णयं कृत्वा ते त्रयः अपि त्रिसृषु दिक्षु प्रस्थितवन्तः ।

एवम् एव सप्ताहाः, मासाः च अतीताः । अग्रिमशिवरात्रिः अपि आगता । महावटरथोत्सवः अपि प्रचलन् आसीत् । विविधैः वणिग्भिः दूरदेशेभ्यः अपूर्ववस्तूनि अपि विक्रयणार्थम् आनीतानि आसन् । पूर्वतननिर्णयानुसारम् अजयः रथोत्सव-स्थानम् आगतवान् । सः वर्षाभ्यन्तरे एव अधिकं धनं सङ्गृहीतवान् आसीत् । अतः अग्रजयोः आगमनात् पूर्वम् अल्पेन धनेन अपूर्वं किञ्चित् वस्तु क्रेतव्यम् इति निश्चितवान् सः ।

सः बहूनि अपूर्ववस्तूनि दृष्टवान् । तत्र एकं निम्बुकम् आसीत् । तत् सामान्यं न आसीत् । तस्य वैशिष्ट्यम् आसीत् यत् यः केऽपि येन केनापि रोगेण पीडितः अस्ति चेत् तत् फलं कर्तयित्वा रुग्णस्य मुखे तदीयः रसः स्थाप्यते चेत् रोगः अनुक्षणम् एव निवारितः भवति स्म । सहस्रं नाणकानि दत्त्वा अजयः तत् फलं क्रीतवान् । अग्रजयोः प्रतीक्षां कुर्वन् तत्रैव उत्सवं पश्यन् स्थितवान् ।

विजयः अपि तत्र आगतवान् । तेन अपि अधिकं धनं सम्पादितम् आसीत् । सः अपि किञ्चित् अपूर्वं वस्तु क्रीतवान् । तत् आसीत् एकः वस्त्रकटः । सः सामान्यः वस्त्रकटः न आसीत् । तस्य उपरि उपविश्य कुत्रापि गन्तुम् इच्छा कृता चेत् अनुक्षणम् एव गन्तुं शक्यते स्म ।

अनन्तरं ज्येष्ठः जयपालः तस्मिन् दिने एव प्रत्यागतवान् । तेन अपि अपारं धनं सङ्गृहीतम् आसीत् । सः अपि अपूर्ववस्तूनि दृष्टवान् । तत्र सः एकं दर्पणं दृष्टवान् । 'एतस्य मूल्यं कियत् ?' इति आपणिकं पृष्टवान् ।

'एतस्य मूल्यं सहस्रं रजतनाणकानि'

इति उक्तवान् आपणिकः ।

एतत् श्रुत्वा जयपालः आश्चर्यचकितः । ''एतादृशस्य सामान्यदर्पणस्य मूल्य सहस्रं रजतनाणकानि वा ? एतस्य तादृशं वैशिष्ट्यं किम् अस्ति?'' इति पृष्टवान् सः ।

तदा आपणिकः उक्तवान् - ''भोः ! साधारणं रूपं द्रष्टुं योग्यः दर्पणः न एषः । भवान् यं कमपि स्मृत्वा यदि एतेन दर्पणेन पश्यति तर्हि तस्य मुखं दर्पणे दृश्यते'' इति ।

अनुक्षणम् एव जयपालः राजकुमार्याः निरुपमादेव्याः मुखं स्मृतवान् । ताम् एकवारं द्रष्टुम् इष्टवान् च । अतः सः आपणिकाय सहस्रं रजतनाणकानि दत्त्वा दर्पणं क्रीतवान् । निरुपमादेवीं स्मरन् दर्पणेन तस्याः मुखं दृष्टवान् । अनुक्षणम् एव तस्य अत्यन्तं दुःखं जातम् । यतः दर्पणेन दृष्टा राजकुमारी रुग्णा आसीत् । वैद्यः तस्याः नाडीं दृष्ट्वा परीक्षां कुर्वन् आसीत् । तस्याः प्राणाः अपरक्षणे एव गच्छेयुः इति भासते स्म । शीघ्रं गत्वा सा द्रष्टव्या इति चिन्तितवान् जयपालः । किन्तु नगरं तु दूरे आसीत् । किं करणीयम् इति अजानन् जयपालः दुःखेन आपणतः बहिः आगतवान् ।

तावता विजयः तस्य पुरतः आगतवान् । अनुजं दृष्ट्वा जयपालः दर्पणेन राजकुमारीं दर्शयन् - ''पश्यतु, विजय ! राजकुमारी निरुपमादेवी आसन्नमरणा अस्ति । एतादृशसन्दर्भे वयम् अपि दूरे स्मः । इदानीम् अस्माभिः किं कर्तुं शक्यते ?'' इति अत्यन्तं दुःखेन पृष्टवान् ।

''भवतः भयं मास्तु'' इति वदन् विजयः हस्ते स्थितं वस्त्रकटं भूमौ प्रसार्य - ''एतस्य वस्त्रकटस्य उपरि उपविश्य





क्षणाभ्यन्तरे एव वयं राजकुमार्याः निरुपमादेव्याः समीपं गन्तुं शक्नुमः'' इति अग्रजम् उक्तवान् ।

एतस्मात् जयपालस्य उत्साहः द्विगुणितः जातः । प्रसारिते वस्त्रकटे उभौ अपि यावत् उपविष्टवन्तौ तावता अजयः तत्र आगतवान् । तदा विजयः - ''सम्भाषणार्थं समयः नास्ति इदानीम् । राजकुमारीं प्राणसहितं द्रष्टुम् आवां गच्छन्तौ स्वः'' इति उक्तवान् ।

अजयः प्रतिवचनं किमपि अनुक्त्वा वस्त्रकटे उपविष्टवान् । अनुक्षणम् एव ते त्रयः अपि भवानीनगरे प्रासादे आसन्नमरणायाः राजकुमार्याः शय्यायाः पार्श्वे उपस्थिताः अभवन् ।

अजयः तस्याः समीपं गतवान् । स्वहस्ते स्थितं निम्बुकं कर्तयित्वा निष्पीड्य तस्य रसं राजकुमार्याः मुखे पातितवान् च ।

झटिति एव राजकुमार्याम् अनिरीक्षितं परिवर्तनं दृष्टम् । क्षणाभ्यन्तरे एव सा नेत्रे उद्घाट्य शय्यातः उत्थितवती । एतत् दृष्टवतां तत्र स्थितानां सर्वेषां नेत्राभ्याम् आनन्दश्रूणि आगतानि ।

महाराजः महता सन्तोषेण प्रेम्णा च तेषां त्रयाणां सहोदराणां हस्तौ गृहीत्वा - ''महानुभावाः ! मम पुत्रीम् उज्जीवयितुम् आगताः भवन्तः देवताः एव, न तु मानवाः । मम पुत्र्याः विवाहपर्यन्तम् भवन्तः अत्रैव स्थित्वा मम आतिथ्यं स्वीकृत्य गच्छेयुः'' इति उक्तवान् । त्रयः सहोदराः अपि एतत् वचनम् अङ्गीकृतवन्तः ।

परन्तु तत्र काचित् समस्या आसीत् । यः राजकुमार्याः रोगं निवारयति तेन सह राजकुमार्याः विवाहः निर्वर्तयिष्यते इति महाराजेन उद्घोषणं कारितम् आसीत् । एतस्मात् एतेषु त्रिषु सहोदरेषु राजकुमार्याः विवाहः केन सह निर्वर्तनीयः इति राजा न ज्ञातवान् । अतः सः एतस्य निर्णयार्थं मन्त्रिणं पृष्टवान् ।

परन्तु एतेषां त्रयाणां कथां श्रुत्वा मन्त्रिणः भ्रमः जातः । एतेषु त्रिषु राजकुमारीं कः रक्षितवान् ? जयपालेन दर्पणेन राजकुमारी यदि दृष्टा न स्यात् तर्हि निरुपमायाः रोगः न ज्ञातः स्यात् । विजयस्य वस्त्रकटस्य साहाय्यं यदि न स्यात् तर्हि समये आगमनं न जातं स्यात् । तथापि अजयस्य अपूर्वं निम्बुकं यदि न स्यात् तर्हि राजकुमार्याः रोगः न निवारितः स्यात् ।

इदानीं किं करणीयम् इति सर्वेषां चिन्ता अभवत् ।

"भवतु, राजकुमारी केन परिणेतव्या इति भवन्तः एव निर्णयं स्वीकुर्वन्तु" इति मन्त्री तान् सहोदरान् उक्तवान् । तदा तावत्पर्यन्तम् एकस्मिन् दिने अपि कलहम् अकृतवन्तः ते सहोदराः राजकुमार्याः परिणयार्थं कलहम् आरब्धवन्तः । परस्परं दोषारोपणं कृतवन्तः च ।

एतत् दृष्ट्वा मन्त्री महाराजम् उक्तवान् - "महाप्रभो ! तर्कशास्त्रज्ञाः एव एतत् परिहर्तुं शक्नुवन्ति । अतः तान् आहूय चर्चां कृत्वा निर्णयं स्वीकरिष्यामः" इति । एतत् महाराजः अङ्गीकृतवान् ।

केषुचित् दिनेषु एव सभा आयोजिता । बहूनि दिनानि चर्चा प्राचलत् । परन्तु समस्यायाः परिहारः न ज्ञातः । अन्ते राजकुमारी निरुपमा एव - 'एतस्याः समस्यायाः परिहारार्थं अहम् एव मार्गं सूचयामि' इति सर्वान् प्रार्थितवती ।

"अस्माभिः परिहर्तुम् अशक्या समस्या एतया परिह्रियते वा ?" इति सर्वे तार्किकाः आश्चर्यचकिततया तां दृष्टवन्तः ।

तदा राजकुमारी उक्तवती - "भवतां चिन्तनम् एव अन्यत् अस्ति । मम प्राणरक्षणे कः समर्थः आसीत् इति भवन्तः चिन्तयन्तः सन्ति । एतस्मिन् विषये सर्वेऽपि समर्थाः एव । परन्तु एकं प्रमुखं विषयं भवन्तः विस्मृतवन्तः । सः च मम निमित्तं कः अधिकं त्यागं कृतवान् ? इति । जयपालस्य दर्पणेन, विजयस्य वस्त्रकटेन, अजयस्य निम्बुकेन च अहम् उज्जीविता । परन्तु जयपालस्य दर्पणः, विजयस्य वस्त्रकटः च तयोः समीपे एव इदानीम् अपि अस्ति । तयोः वस्तुनः उपयोगः यदा कदापि कर्तुं शक्यते । परन्तु अजयस्य निम्बुकप्रभावः समाप्तः । पुनः तस्य उपयोगः तेन कर्तुं न शक्यते । अतः भवन्तः एव निर्णयन्तु यत् मां परिणेतुं कः समर्थः इति" इति ।

तत्रत्याः सर्वे निरुपमायाः सूक्ष्मबुद्धिं श्लाघितवन्तः । अजयेन सह तस्याः विवाहं निर्वर्तितवन्तः च ।

अजयः स्वसाहाय्यं कृतवतोः अग्रजयोः सम्माननं कृतवान् । स्वपुत्राणां वर्धनं दृष्ट्वा जयशीलः अपि नितरां सन्तुष्टः ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां मे - १९९७ मासे प्रकटयिष्यामः ।



S.G. SESHAGIRI



MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

'जनवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **पिपासानिवृत्त्यै कल्पन्ते हि नारिकेलानि ।**

द्वितीयचित्रम् - **कष्टविस्मरणार्थं खलु कल्पन्ते अपत्यानि ।**

प्रेषकः - बि. वेङ्कटेश्वरराव्, ४-९-१६०/३, विनायकनगरम्, आर्.टि.सि. कालोनी, हयात्नगरम् - ५०१ ५०५ (आ.प्र.)




Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras - 600 026 (India). Controlling Editor: NAGI REDDI.

**PolioPlus**



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | BCG | Tuberculosis | Once |
| 6 weeks | Polio | Polio | Three times with intervals of at least one month |
| 6 weeks | DPT | Diphtheria Pertussis (Whooping Cough) Tetanus | Three times with intervals of at least one month |
| 9 months | Measles | Measles | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**

Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

**HEALTHY CHILD—NATION'S HOPE & PRIDE**

Design courtesy : World Health Organisation




Rs. 30/-




Rs. 40/-




Rs. 30/-




Rs. 30/-




Rs. 25/-




Rs. 30/-

**CHANDAMAMA BOOKS ARE ALREADY A LEGEND! THEY OPEN A NEW HORIZON ON THE WORLD OF LITERATURE FOR THE YOUNG**

Added to the six titles by **Manoj Das** is the charming seventh–

**WHEN THE TREES WALKED**

by the inimitable story-teller **Ruskin Bond**




Rs. 30/-

Among the titles in the process of production are:

**STORY OF KRISHNA**
**STORY OF RAMA**
**STORY OF BUDDHA**



For details, write to:

**CHANDAMAMA BOOKS**
Chandamama Buildings
Vadapalani, Madras - 600 026.